वेदाचार्य पं० दौलतराम गौड स्मारक ग्रन्थमाला की ४८वीं पुष्पलता



# शुक्लयजुर्वेदीयमन्त्रसंहिता

(मन्त्रसंख्या ६००)

स्व० महामहोपाध्याय श्री पं० विद्याधर गौड आहिताग्नि पौत्र
उत्तरप्रदेशीय सरकार द्वारा सम्मानित
स्व० श्री० पं० दौलतराम गौड वेदाचार्य पुत्र
**पं० अशोक कुमार गौड वेदाचार्य** द्वारा सम्पादित

प्रकाशक :

**रुपेश ठाकुर प्रसाद प्रकाशन**

कचौड़ीगली, वाराणसी-221001

फोन : 2392471, 2392543

प्रथम संस्करण - २००८ ई०

मूल्य : 120/-

मुद्रक :
भारत प्रेस
कचौड़ीगली, वाराणसी



## समर्पित



**डॉ० पं० कमलाकान्त त्रिपाठी**

अध्यक्ष : मीमांसा विभाग
( सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी )

को

सादर समर्पित

यजुर्वेदस्य शुक्लस्य सा चेयं मन्त्रसंहिता।
समर्प्यते मया भक्त्या कमलाकान्तशर्मणे॥

भावत्क एव—अशोक कुमार गौडः

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता
३

## भूमिका

वेद चार हैं, यथा—ऋग्वेद, यजुर्वेद, सामवेद और अथर्ववेद। वेद शब्द 'विद्' धातु के घञ् प्रत्यय होने पर निष्पन्न होता है। 'यस्य निश्वसितं वेदाः' उस परब्रह्म परमात्मा के श्वासभूत वेदों का प्रादुर्भाव प्रगल्भ तप और प्रखर प्रतिभापूर्ण महर्षियों के अविच्छिन्न ज्ञान द्वारा स्वतः प्रस्फुटित शब्दराशि द्वारा हुआ। वेदों का स्वरूप क्या है? इस विषय में 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आपस्तम्ब श्रौ० सू० २४।१।३१) अर्थात् मन्त्र और ब्राह्मण वेद कहे जाते हैं। वैसे भी हिन्दू जाति का प्राचीन धर्म ग्रन्थ वेद ही है।

यजुर्वेद के दो विभाग हैं—शुक्ल यजुर्वेद और कृष्ण यजुर्वेद। शुक्ल यजुर्वेद की दो ही शाखाएँ मिलती हैं—एक माध्यन्दिनीय और दूसरी काण्व शाखा। शुक्ल यजुर्वेद माध्यन्दिनीय शाखा में चालीस अध्याय और १९७५ मंत्र हैं। इन सभी मंत्रों का कर्मकाण्ड में उपयोग होता है। इन्हीं १९७५ मंत्रों में से चयन करके इस 'शुक्लयजुर्वेदीयमन्त्रसंहिता' का निर्माण किया गया है। जो ब्राह्मण शुक्लयजुर्वेद संहिता के चालीस अध्यायों को कण्ठस्थ न कर सकें, यदि वे इस पुस्तक में दिये गये मंत्रों को कण्ठस्थ कर लें तो, वे निःसंदेह कर्मकाण्ड में निपुणता प्राप्त कर समस्त प्रकार के कर्मकाण्डों को सुगम रूप से करा सकेंगे। कम से कम इस पवित्र भारत भूमि में प्रत्येक द्विज वेदाभ्यास द्वारा धर्म, अर्थ, काम और मोक्ष चतुर्विध पुरुषार्थों की सिद्धि सरलता से प्राप्त कर सकता है। इस पुस्तक में उन सभी मन्त्रों का समावेश है, जिसकी आवश्यकता वैदिक, कर्मकाण्डी और अध्ययनरत छात्रों को पड़ सकती है।

परिशिष्ट भाग में मेरे पितामह महामहोपाध्याय स्व० पं० विद्याधरजी गौड़ द्वारा लिखित व्यवस्थाओं का भी समावेश है। मुझे आशा ही नहीं, अपितु पूर्ण विश्वास है कि इस पुस्तक का आश्रय लेकर सम्पूर्ण कर्मकाण्ड पूर्णरूप से कराया जा सकता है।

भवदीय :
**अशोक कुमार गौड**

भारतीय कर्मकाण्ड मण्डल,
डी० ७/१४, सकरकन्द गली, वाराणसी
दूरभाष : ६५३४९८६, ९७९२३५३७४५



## विषयानुक्रमणिका

॥ गं गणपतये नमः ॥

# ।। श्रीशुक्लयजुर्वेदीयमन्त्रसंहिता ।।

श्रीगणेशाय नमः॥ श्रीसरस्वत्यै नमः। श्रीवेद-पुरुषाय नमः। चतुर्वेदमन्त्राः—तत्रादौ ऋग्वेदमन्त्रः—ॐ[1] अग्निमीले पुरोहितं यज्ञस्यदेवमृत्विजम्। होतारं रत्नधातमम्॥१॥ शुक्लयजुर्वेदमन्त्रः—ॐ इषे त्त्वोर्ज्जेत्त्वावायवस्त्थदेवोवः सविताप्प्रार्प्प्

१. त्रिमात्रः प्रणवोवाच्यः कर्मारम्भे च सर्वदा॥

यतु॒श्श्रेष्ठ॑तमाय॒कर्म्म॑ण॒ऽआप्प्या॑यद्ध्वमघ्न्या॒ऽ इन्द्राय॒भा॒गां प्र॒जा वतीरनमीवाऽअंय॒क्ष्मामावस्ते॒नऽ ई॑शत॒माऽघश॑ꣳसोद्ध्रुवाऽअ॒स्मिन्न्गोपतौस्यात ब॒ह्वीर्यजमानस्यप॒ शून्पा॑हि॥२॥ सामवेदमन्त्रः- ॐ अग्ग्नऽआयाहिवीतयेगृणानोहव्यदातये। निहोता सत्सिबर्हिषि॥३॥ अथर्ववेदमन्त्रः-ॐ शन्नो देवी रभिष्ट्टयऽआपोभवन्तु पीतये। शंय्योरभिस्स्त्र वन्तुनः॥४॥

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १२



प्रधानदेवतामन्त्राः-[१]गणेशमन्त्रः-हरिः ॐ ग॒णा नान्त्वा ग॒णप॑तिꣳ हवामहे प्प्रि॒याणान्त्वाप्प्रि॒यप॑तिꣳ हवामहेनिधी॒नान्त्वानिधि॒ पतिꣳहवामहेव्वसोमम। आहमजानिगर्ब्भ॒धमात्त्वमजासिगर्ब्भ॒धम्॥५॥ अम्बामन्त्रः-ॐ अम्बे॒ऽअम्बिकेम्बालिके॒नमान यति॒कश्च॒न। ससस्त्यश्व॒कः सुभद्रिकाङ्काम्पील वा॒सिनीम्॥६॥

१. अ-तवावतारो दैत्यानां विनाशाय ममात्मज। देवानामुपकारार्थं द्विजानां ब्रह्मवादिनाम्॥ ( लिङ्गपुराण )
ब-पूर्णानन्दः परानन्दः पुराणपुरुषोत्तमः। ( गणेशपुराण २।१५।१०३ )

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १३

[1]विष्णोमन्त्रः—ॐ तद्विष्णोः परमम्पदꣳसदा पश्यन्तिसूरयः। दिवीवचक्षुराततम्॥७॥ [2]सूर्यस्य मन्त्रः—ॐ आ कृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतंमर्त्यं च। हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन्॥८॥ [3]शिवस्य मन्त्रः—ॐ नमस्ते रुद्रमन्यवऽउतोतऽइषवेनमः। बाहुभ्यामुततेनमः॥९॥

---

१. यतोयश्च स्वयं विश्वं स विष्णुःपरमेश्वरः॥ (श्रीविष्णुपुराण-१।१७।२२)

२. य एष आदित्ये पुरुषो दृश्यते। (छा० उ० ४।११।२)

३. शिवेतिनामदावाग्नेर्महापातकपर्वताः। भस्मीभवन्त्यनायासात् सत्यं सत्यं न संशयः॥ (शि.पु.रु.सृ.४।४५)



[1]कृष्णस्य मन्त्रः—ॐ कृष्णोस्याखरेष्ठो ग्ग्रयेत्त्वा जुष्टम्प्रोक्षामिवेदिरसिबर्हिषेत्त्वाजुष्टम्प्रोक्षामिबर्हिरसिस्त्रुग्भ्यस्त्वाजुष्टम्प्रोक्षाम्यदित्त्यै व्युन्दनम्॥१०॥ [2]राधाया मन्त्रः—ॐ श्वात्रास्स्थवृत्रतुरोराधोगूर्ताऽअमृतस्यपत्नीः। तादेवीर्देवत्रेमंयज्ञन्नयतोपहूताःसोमस्यपिबत॥११॥ [3]श्रीरामस्य मन्त्रः—ॐ प्रतद्विष्णुस्त

---

१. महाविपत्तौ संसारे यः स्मरेन्मधुसूदनम्। विपत्तौ तस्य सम्पत्तिर्भवेदित्याह शंकरः॥ (प्रकृतिखंड ३७।४०)

२. तप्तस्वर्णप्रभां राधा सर्वालङ्कारभूषिताम्। नीलवस्त्रपरिधानां भजे वृन्दावनेश्वरीम्॥ (ब्रह्मवैवर्तपुराण)

३. रामस्य नाम रूपं च लीला धाम परात्परम्। एतच्चतुष्टयं सर्वं सच्चिदानन्दविग्रहम्॥ (वसिष्ठसंहिता)

वते व्वीर्य्येणमृगोनभीमः कुचरोगिरिष्ठाः। यस्यो रुषु त्रिषुव्विक्क्रमणेष्ष्वधिक्षियन्तिभुवनानिव्विश्श्वा॥१२॥

[1]हनुमन् मन्त्रः—ॐ आतिथ्थ्यरूपम्मासरम्महावीरस्य नग्ग्रहुः। रूपमुपसदामेतत्तिस्रोरात्रीः सुरासुता॥१३॥

[2]नारायणस्य मन्त्रः—ॐ व्विष्ष्णो रराटमसिव्विष्ष्णोः श्नप्त्रेस्त्थोव्विष्ष्णोः स्यूरसिव्विष्ष्णोर्ध्रुवोसि। व्वैष्ष्णव मसिव्विष्ष्णवेत्त्वा॥१४॥

---

१. अ-अञ्जनीगर्भसम्भूतो हनुमान् पवनात्मजः। यदा जातो महादेवो हनुमान् सत्यविक्रमः॥ (वायु पु.पू. ६०।७३)
ब-पञ्चवक्त्रं महाभीमं त्रिपञ्चनयनैर्युतम्। बाहुभिर्दशभिर्युक्तं सर्वकाम्यार्थसिद्धिदम्॥ (पञ्च.ह.प्र. ३३।२)

२. नारायणपरा यज्ञाः। (ब्रह्मपुराण ६०।२६)



लक्ष्म्यामन्त्रः—ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वेनक्षत्त्राणिरूपमश्श्विनौव्यात्तम्। इष्ष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण॥१५॥ [1]नृसिंहस्य मन्त्रः—ॐ प्रतद्विष्ष्णुस्तवते व्वीर्य्येणमृगोनभीमः कुचरोगिरिष्ठाः। यस्योरुषुत्रिषुव्विक्क्रमणेष्ष्वधि क्षियन्तिभुवनानिव्विश्श्वा॥१६॥ [2]काल्या मन्त्रः— ॐ कन्न्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्ज्ञानाऽअभिचा

---

१. नरं नृसिंहं नरनाथमच्युतं प्रलम्बबाहुं कमलायतेक्षक्षम्। क्षीतीश्वरैरर्चितपादपंकज नमामि विष्णुं पुरुषं पुरातनम्॥ (नरसिंह-पु०)

२. तस्यां विनिर्गतायां तु कृष्णभूतसापि पार्वती। कालिकेति समाख्या हिमालयकृताश्रया॥ (मा०पु०)

कशीमि। यत्रसोमः॑सूयतेयत्रयज्ञोघृतस्यधाराऽ अभितत्प्पवन्ते॥१७॥ [1]गायत्र्या मन्त्रः—ॐ गायत्री त्रिष्टुब्ब्जगत्यनुष्टुप्प्पङ्क्त्त्यासह। बृहत्युष्णिहा ककुप्प्सूचीभिः शम्म्यन्तुत्वा॥१८॥ सरस्वत्या मन्त्रः—ॐ पावकानः॑सरस्वतीव्वाजेभिर्व्वाजिनीवती। यज्ञम्वष्टुधियाव्वसुः॑॥१९॥ गंगाया मन्त्रः—ॐ ऐन्द्रः॒ प्प्राणोअङ्गेऽअङ्गेनिदीद्ध्यदैन्द्रऽउदानोऽअङ्गेऽअङ्गे

१. सर्वेषामेव वेदानां गुह्योपनिषदां तथा। सारभूता तु गायत्री निर्गता ब्रह्मणो मुखात्॥ (छा०परिशिष्ट)



निधीतः॑। देवत्त्वष्टुर्ब्भूरितेसः॑समेतुसलक्ष्मायद्विषुरूपम्भवाति। देवत्राय़न्तमवसे सखायो नुत्वा मातापितरौमदन्तु॥२०॥ [1]श्यामदेवस्य मन्त्रः—ॐ अश्या मतङ्कामममग्ग्नेतवोतीऽअश्यामरयिः॑ रयिवः॑ सुवीरम्। अश्यामव्वाजमभिवाजयन्तोश्श्यामद्द्युम्म्नमजराजरन्ते॥२१॥ भैरवस्य मन्त्रः—ॐ येभूतानामधिपतयोव्विशिखासः॑कपर्द्दिनः॑। तेषाः॑ सहस्रयोजनेवधन्न्वानितन्न्मसि॥२२॥ वरुणमन्त्रः—ॐ तत्त्वा

१. द्वापरे भगवान् श्यामः पीतवासा निजायुधः। श्रीवत्सादिभिरन्यैश्च लक्षणैरूपलक्षितः॥ (श्रीमद्भागवत)

याभिर्ब्ब्रह्मणाव्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः। अहेडमानो व्वरुणेह बोध्युरुशꣳस मान ऽआयुꣳ प्प्रमोषीः॥२३॥ बगलामुखीमन्त्रः—ॐ अमीषाञ्चित्तम्प्रतिलोभयन्ती गृहाणाङ्गान्न्यप्वे परेहि। अभिप्प्रेहि निर्द्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम्॥२४॥ ईश्वरमन्त्रः—ॐ न तस्य प्प्रतिमा ऽअस्ति यस्य नाम महद्यशः। हिरण्यगर्ब्भ ऽइत्येष मा मा हिꣳसीदित्येषा यस्मान्न जात ऽइत्येषः॥२५॥



त्र्यम्बकमन्त्रः—ॐ त्र्यम्बकं य्यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय माऽमृतात्॥२६॥ ब्रह्ममन्त्रः—ॐ ब्ब्रह्म जज्ञानं प्रथमम्पुरस्ताद्विसीमतः सुरुचो व्वेन ऽआवः। स बुध्न्या ऽउपमा ऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः॥२७॥ स्कन्दमन्त्रः—ॐ यदक्क्रन्दः प्प्रथमञ्जायमान ऽउद्यन्त्समुद्द्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू ऽउपस्तुत्यम्महि जातन्ते ऽअर्व्वन्॥२८॥

विश्वकर्ममन्त्रः—ॐ विश्श्वकर्म्मन् हुविषाव्वर्द्धनेन त्रातारमिन्द्रमकृणोरवुद्ध्यम्। तस्म्मैव्विशः समनन मन्तपूर्व्वीरयमुग्ग्रोव्विहव्योयथासत्॥२९॥ विशिष्ट-मन्त्राः—सर्पमन्त्रः—ॐ नमोऽस्तुसर्प्पेब्भ्योयेकेच पृथिवीमनु। येऽअन्तरिक्षेयेदिवितेब्भ्यः सर्प्पेब्भ्यो नमः॥३०॥ सप्तर्षिमन्त्रः—ॐ सप्तऽऋषयःप्प्रति हिताःशरीरेसप्तरक्षन्तिसदमप्प्रमादम्। सप्तापः स्वपतोलोकमीयुस्तत्रजागृतोऽअस्वप्नजौसत्रसदौच



देवौ॥३१॥ ध्रुवमन्त्रः—ॐ ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवा सिद्ध्रुवं य्योनिमासीदसाधुया। उक्ख्यस्यकेतुम्प्रथम ञ्जुषाणाशिश्वनाद्ध्वर्य्यूसादयता मिहत्त्वा॥३२॥ भूत-मन्त्रः—ॐ भूतायत्त्वानारातयेस्वरभिविक्ख्येषन्दृ ह्न्तान्दुर्य्याः प्पृथिव्यामुर्व्वन्तरिक्षमन्वेमिपृथिव्यास्त्वा नाभौसादयाम्यदित्याऽउपस्त्थेऽग्नेहव्यःरक्ष॥३३॥ प्रेतमन्त्रः—ॐ प्रेताजयतानरऽइन्द्रोवः शर्म्मयच्छतु। उग्ग्रावःसन्तुबाहवोनाधृष्ष्यायथासथ॥३४॥

अगस्तिमन्त्रः—ॐ कुम्भोव्वनिष्ठुर्ज्जनिताशचीभिर्य्यस्मिन्नग्ग्रेषोन्याङ्गब्भौऽअन्तः। प्लाशिर्व्यक्तः शतधारऽउत्सोदुहेनकुम्भीस्वधां पितृब्भ्यः॥३५॥ पृथ्वीमन्त्रः—ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी। यच्छानः शर्म्मसप्रथाः॥३६॥ अपां मन्त्रः—ॐ अप्स्वग्ग्नेसधिष्ठवसौषधीरनुरुद्ध्यसे। गब्भेसञ्जायसेपुनः॥३७॥ तेजोमन्त्रः—ॐ अग्निन्दूतं पुरो दधेहव्यवाहमुपब्ब्रुवे। देवाँ२ऽआसादयादिह॥३८॥





वायुमन्त्रः—ॐ व्वातोव्वामनोव्वागन्धर्व्वाः सप्तविंशतिः। तेऽअग्ग्रेऽश्श्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः॥३९॥ आकाशमन्त्रः—ॐ याव्वाङ्कशामधुमत्यश्श्विनासूनृतावती। तयायज्ञम्मिमिक्षतम्॥४०॥ देवपत्नीमन्त्रः—ॐ तम्पत्क्नीभिरनुगच्छेमदेवाः पुत्रैर्ब्भ्रातृभिरुतव्वाहिरण्ण्यैः। नाकङ्गृब्भ्णानाः सुकृतस्यलोकेतृतीयेपृष्ठेऽअधि रोचनेदिवः॥४१॥ समुद्रमन्त्रः—ॐ समुद्रोऽसिनभस्वानार्द्द्रदानुः शम्भू

र्म्मींयोभूरभिमाव्वाहि स्वाहामारुतोऽसिमरुताङ्गणः शम्भूर्म्मींयोभूरभिमाव्वाहिस्वाहावस्यूरसिदुवस्वाञ्छ्म्भूर्म्मींयोभूरभिमाव्वाहिस्वाहा॥४२॥ पर्वतमन्त्रः—

ॐ प्प्रर्व्वतस्यव्वृषभस्यपृष्ठान्नावश्श्चरन्तिस्वसिचऽइयानाः। ताऽआवव्वृत्रन्नधरागुदत्त्क्ताऽअहिम्बुध्न्यमनुरीयमाणाः। व्विष्णणोर्व्विक्क्रमणमसिव्विष्णणोर्व्विक्क्रान्तमसि व्विष्णणोः क्क्रान्तमसि॥४३॥

संवत्सरमन्त्रः—ॐ संव्वत्सरोऽसिपरिवत्सरोऽसीदा





वत्सरोऽसीदद्वत्सरोऽसिव्वत्सरोऽसि। उषसस्तेकल्प्पन्तामहोरात्रास्तैकल्प्पन्तामर्द्धमासास्तैकल्प्पन्तां मासास्तेकल्प्पन्तामृतवस्तेकल्प्पन्ताᳬ संव्वत्सरस्तैकल्प्पताम्। प्रेत्याऽएत्यैसञ्चाञ्चप्प्रचसारय। सुपर्ण्णचिदसितयादेवतयाङ्गिरस्वद्ध्रुवः सीद॥४४॥

षडर्तुमन्त्राः—तत्रादौ वसन्तर्तुमन्त्रः—ॐ व्वसन्तेनऽऋतुनादेवा व्वसवस्त्रि वृतास्तुताः। रथन्तरेणतेजसाहुविरिन्द्रेव्वयोदधुः॥४५॥ ग्रीष्मर्तुमन्त्रः—ॐ ग्रीष्मेणऽ

ऋतुनादेवा रुद्राःपञ्चदशेस्तुताः। बृहतायशसाबलꣳ
हविरिन्द्रेव्वयोदधुः ॥४६॥ वर्षर्तुमन्त्रः—ॐ व्वर्षाभि
र्ऋतुनादित्यास्तोमैसप्तदशेस्तुताः। व्वैरूपेणव्विशौ
जसाहविरिन्द्रेव्वयोदधुः ॥४७॥ शरदृतुमन्त्रः—ॐ
शारदे नऽऋतुनादेवाऽएकविꣳशऽऋभवस्तुताः।
व्वैराजेनश्श्रियाश्श्रियꣳहविरिन्द्रेव्वयोदधुः ॥४८॥
हेमन्तर्तुमन्त्रः—ॐ हेमन्तेनऽऋतुनादेवास्त्रिणवेम
रुतस्तुताः। बलैनशक्क्वरीःसहोहविरिन्द्रेव्वयो



दधुः ॥४९॥ शिशिरर्तुमन्त्रः—ॐ शैशिरेणऽऋतुना
देवास्त्रयस्त्रिꣳशेऽमृतास्तुताः। सत्येनरेवतीः क्षत्रꣳ
हविरिन्द्रेव्वयोदधुः ॥५०॥ मासमन्त्रः—ॐ अर्द्ध
मासाःपरूꣳषिते मासाऽआच्छ्यन्तुशम्म्यन्तः।
अहोरात्राणिमरुतोव्विलिष्टꣳसूदयन्तुते ॥५१॥ पक्ष-
मन्त्रः—ॐ इमौतेपक्षावजरौपतत्रिणौयाब्भ्याꣳ
रक्षाꣳस्यपहꣳस्यग्ग्ने। ताब्भ्याम्पतेमसुकृतामु
लोकं यत्रऽऋषयो जग्मुः प्रथमजाःपुराणाः ॥५२॥

शुक्लपक्षमन्त्रः—ॐ अग्ग्नेः पक्षतिर्व्वायोर्न्निपक्षतिरिन्द्रस्यतृतीया सोमस्य चतुर्त्थ्यदित्यैपञ्चमीन्द्राण्ण्यै षष्ठीमरुताᳬं सप्प्तमीबृहस्प्पतेरष्टम्म्यर्य्यम्णो नवमीधातुर्द्दशमीन्द्रस्यैकादशीव्वरुणस्यद्वादशी यमस्यत्रयोदशी॥५३॥ कृष्णपक्षमन्त्रः—ॐ इन्द्राग्न्योः पक्षतिः सरस्वत्यैनिपक्षतिर्म्मित्रस्य तृतीया पाञ्चतुर्त्थीनिर्ऋत्यैपञ्चम्म्यग्नीषोमयोः षष्ठीसर्प्पाणाᳬंसप्प्तमीव्विष्ण्णोरष्टमीपूष्ण्णोनवमीत्वष्टुर्द्दश



मीन्द्रस्यैकादशीव्वरुणस्यद्वादशीयम्म्यैत्रयोदशी द्यावापृथिव्व्योर्द्दक्षिणम्पाशर्व्वंव्विश्श्वेषान्देवानामुत्तरम्॥५४॥ दिनमन्त्रः—ॐ अह्नेपारावतानालभते रात्र्यैसीचापूरहोरात्रयोः सन्धिभ्भ्योजतूम्मासेभ्भ्यो दात्यौहान्त्संवत्सरायमहतः सुपर्ण्णान्॥५५॥ नक्षत्र-मन्त्राः—तत्रादौ अश्विनीमन्त्रः—ॐ यावाङ्कशामधुमत्यश्श्विनासूनृतावती। तयायज्ञं मिमिक्षतम्॥५६॥ भरणीमन्त्रः-ॐ यमायत्त्वा मखायत्त्वा सूर्य्यस्य

त्त्वा तपसे। देवस्त्वासवितामद्ध्वानक्तुपृथिव्व्याᳬसꣳ
स्पृशस्प्पाहि। अर्च्चिरसिशोचिरसितपोऽसि॥५७॥
कृत्तिकामन्त्रः—ॐ अग्निन्दूतम्पुरोदधेहव्व्यवाहमुप
ब्रुवे। देवाँ२ऽआसादयादिह॥५८॥ रोहिणीमन्त्रः—
ॐ प्रजापतेनत्वदेतान्यन्न्योव्विश्श्वारूपाणिपरिता
बभूव। यत्कामास्तेजुहुमस्तन्नोऽअस्तुव्वयꣳस्याम
पतयोरयीणाम्॥५९॥ मृगशीर्षमन्त्रः—ॐ सोमो
धेनुᳫसोमोऽअर्व्वन्तमाशुᳫसोमोव्वीरङ्कर्म्मण्ण्यन्ददाति।



सादन्न्यम्वि दत्थ्यᳫसभेयम्पितृश्श्रवणंय्योददाश
दस्मै॥६०॥ आर्द्रामन्त्रः—ॐ इमारुद्रायतवसेकप
र्द्दिनेक्षयद्वीरायप्प्रभरामहेमतीः। यथाशमसद्विपदे
चतुष्पदेव्विश्श्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम्॥६१॥
पुनर्वसुमन्त्रः—ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिं
र्मातासपितासपुत्रः। व्विश्श्वे देवाऽअदितिःपञ्चजनाऽ
अदितिर्ज्जातमदितिर्ज्जनित्वम्॥६२॥ पुष्यमन्त्रः—
ॐ बृहस्प्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्क्रतु

मुज्जनैषु। यद्दीदयच्छवसऽ ऋतप्प्रजाततदुस्म्मासुद्द्र विणन्धेहिचित्रम्॥६३॥ आश्लेषामन्त्रः—ॐ नमोऽस्तुसर्प्पेब्भ्योयेकेचपृथिवीमनु। येऽअन्तरिक्षेयेदिवितेब्भ्यः सर्प्पेब्भ्यो नमः॥६४॥ मघामन्त्रः—ॐ उदीरतामवरऽउत्परासऽ उन्मध्यमाः पितरः सोम्यासः। असुंय्यऽईयुरवृकाऽऋतज्ञास्तेनोऽवन्तुपितरोहवेषु॥६५॥ पूर्वाफाल्गुनीमन्त्रः—ॐ भगप्प्रणेतर्ब्भगसत्यराधोभगेमान्धियमुदवाददन्नः। भगप्प्रनोजनय



गोभिरश्वैर्भगप्प्रनृभिर्न्नृवन्तः स्याम॥६६॥ उत्तरा-फाल्गुनीमन्त्रः—ॐ अर्य्यमणं बृहस्प्पतिमिन्द्रन्दानाय चोदय। व्वाचं व्विष्णुं सरस्वतीं सवितारञ्चव्वाजिनं स्वाहा॥६७॥ हस्तमन्त्रः—ॐ उदुत्यञ्जातवेदसन्देवं व्वहन्तिकेतवः। दृशेव्विश्श्वायसूर्य्यम्॥६८॥ चित्रामन्त्रः—ॐ त्वष्ट्टातुरीपोऽअद्भुतऽइन्द्राग्ग्नी पुष्टिव्वर्द्धना। द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्नव्वयो दधुः॥६९॥ स्वातीमन्त्रः—ॐ व्वायुरग्ग्रेगायज्ञप्प्रीः साक

ङ्गन्मनसाषज्ञम्। शिवोनियुद्भिः शिवाभिः॥७०॥
विशाखामन्त्रः—ॐ इन्द्राग्ग्नीऽआगतꣳसुतङ्गीर्ब्भिर्न्न
भोव्वरैण्ण्यम्। अस्यपातन्धियेषिता॥७१॥ अनु-
राधामन्त्रः—ॐ नमोमित्रस्यवरुणस्यचक्षसेमहोदेवा
यतदृतꣳसपर्य्यत। दूरेदृशेदेवजातायकेतवे दिवस्पु
त्रायसूर्य्यायशꣳ सत॥७२॥ ज्येष्ठामन्त्रः—ॐ
त्रातारमिन्द्रमवितार मिन्द्रꣳ हवेहवेसुहवꣳ शूरमिन्द्रम्।
ह्वयामिशक्क्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधा



त्विन्द्रः॥७३॥ मूलमन्त्रः—ॐ माताचतेपिताचते
ऽग्ग्रंव्वृक्षस्यरोहतः। प्रतिलामीतितेपिताग्भेमुष्टि
मतꣳसषत्॥७४॥ पूर्वाषाढामन्त्रः—ॐ अपाधम
दभिशस्तीरशस्तिहाथेन्द्रोद्युम्न्याभवत्। देवास्तऽइन्द्र
सख्यायषेमिरेबृहद्भानोमरुद्गण॥७५॥ उत्तरा-
षाढामन्त्रः—ॐ व्विश्वेदेवासऽआगतशृणुतामऽइमꣳ
हवम्। एदं बर्हिन्निषीदत। उपयामगृहीतोऽसिव्विश्वे
ब्भ्यस्त्वादेवेब्भ्यऽएषतेषोनिर्व्विश्वेब्भ्यस्त्वादेवे

ब्भयः॥७६॥ श्रवणमन्त्रः—ॐ विष्ण्णोरराटमसि
व्विष्ण्णोः श्नप्त्रेस्त्थोव्विष्ण्णोः स्यूरसिव्विष्ण्णोर्द्ध्रु
वोऽसि। व्वैष्ण्णवमसिव्विष्ण्णवेत्त्वा॥७७॥ धनिष्ठा-
मन्त्रः—ॐ व्वसोः पवित्रमसिद्यौरसिपृथिव्व्यसिमात
रिश्श्वनोघर्म्मोऽसिव्विश्श्वधाऽअसि। परमेणधाम्नादृᳫं
हस्वमाह्वार्म्मातेयज्ञपतिर्ह्वार्षीत्॥७८॥ शततारका-
मन्त्रः—ॐ व्वरुणस्योत्तम्भनमसिव्वरुणस्यस्क्कम्भ
सर्ज्जनीस्त्थोव्वरुणस्यऽऋतसदन्न्यसिव्वरुणस्यऽऋत



सदनमसिव्वरुणस्यऽऋतसदनमासीद॥७९॥ पूर्वा-
भाद्रपदमन्त्रः—ॐ त्वन्नोअग्ग्नेव्वरुणस्यव्विद्वान्देव
स्यहेडोऽअवयासिसीष्ठाः। यजिष्ठोव्वह्नितमः शो
शुचानोव्विश्श्वाद्वेषांᳫसिप्प्रमुमुग्ग्ध्यस्म्मत्॥८०॥
उत्तराभाद्रपदामन्त्रः—ॐ अहिरिवभोगैः पर्य्येति
बाहुञ्ज्यायाहेतिं परिबाधमानः। हस्तग्घ्नोव्विश्श्वाव्वयुना
निव्विद्वान्पुमान्पुमांᳫसम्परिपातुव्विश्श्वतः॥८१॥
रेवतीमन्त्रः—ॐ पूषन्तवव्व्रतेव्वयन्नरिष्येमकदाचन।

स्तोतारस्तऽइहस्म्मसि॥८२॥ मातृमन्त्रः—ॐ माता
चतेपिताचतेऽग्ग्रंवृक्षस्यरोहतः। प्रतिलामीतितेपिता
गभेमुष्टिमतꣳ सयत्॥८३॥ पितृमन्त्रः—ॐ पितु
न्नुस्तौषम्महोधर्म्माणन्तविषीम्। यस्यत्रितोव्यो
जसावृत्रम्विपर्वमर्दयत्॥८४॥ मित्रमन्त्रः—ॐ मित्र
स्यमाचक्षुषेक्षदध्वमग्ग्नयःसगराःसगरास्त्थस
गरिणनांनारौद्रेणानीकेनपातमाग्ग्नयःपिप्पृतमाग्ग्न
योगोपायतमानमौवोऽस्तुमामाहिꣳसिष्ट॥८५॥



हस्तिपूजनमन्त्रः—ॐ प्रजापतयेपुरुषान्हस्तिनऽआलभ
तेव्वाचेप्प्लुषींश्चक्षुषेमशकाञ्छ्रोत्रायभृङ्गाः॥८६॥
स्नानविधिमन्त्राः तत्रादौ तीर्थाभिमन्त्रणमन्त्रः—
ॐ उरुꣳहिराजाव्वरुणश्चकारसूर्य्यायपन्थामन्न्वे
तवाऽउ। अपदेपादाप्प्रतिघातवेऽकरुतापवक्त्ता
हृदयाविधश्चित्। नमोव्वरुणायाभिष्ठितोव्वरुण
स्यपाशः॥८७॥ जलावर्तनमन्त्रः—ॐ ये ते शतं
व्वरुणय्ये सहस्रं यज्ञियाः पाशा विततामहान्तः।

ते भिन्नोऽअद्य सवितोत व्विष्णुर्व्विश्श्वेमुञ्चन्तुमरुतः
स्वर्क्काः ॥८८॥ जलाञ्जलिग्रहणमन्त्रः—ॐ सुमित्रि
यानऽआपऽओषधयꣳसन्तु ॥८९॥ तीर्थनमस्कार-
मन्त्रः—ॐ इदं व्विष्णुर्व्विचक्क्रमेत्रेधानिदधेपदम्।
समूढमस्यपाꣳसुरेस्वाहा ॥९०॥ तिलकमन्त्रः—
ॐ सुचक्षाऽअहमक्षीभ्याम्भूयासꣳसुवर्चामुखेन।
सुश्रुत्कर्णाभ्याम्भूयासम् ॥९१॥ शिखाबन्धन-
मन्त्रः—ॐ मा नस्तोकेतनये मानऽआयुषि मानोगोषु



मानोऽअश्श्वेषुरीरिषꣳ। मानोव्वीरान्रुद्रभामिनोव्वधी
र्हविष्मन्तꣳसदमित्त्वाहवामहे ॥९२॥ रुद्राक्षधारण-
मन्त्रः—ॐ त्र्यम्बकं य्यजामहे सुगन्धिम्पुष्टिवर्द्धनम्।
उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥९३॥
गायत्रीमन्त्रः—ॐ तत्सवितुर्व्वरेण्यं भर्ग्गो देवस्य
धीमहि। धियो यो नः प्प्रचोदयात् ॥९४॥ [1]पवित्र-
धारणमन्त्रः—ॐ पवित्त्रेस्थोव्वैष्णव्यौसवितुर्व्वः प्प्रसव
ऽउत्त्पुनाम्म्यच्छिद्द्रेणपवित्त्रेणसूर्य्यस्यरश्मिभिः।

१. अन्यानि च पवित्राणि कुशदूर्वात्मकानि च। हेमात्मकपवित्रस्य कलां नार्हन्ति षोडशीम्॥ (हेमाद्रौ)

तस्यंतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम्॥९५॥ मार्जनमन्त्रौः–ॐ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन। महेरणायचक्षसे॥९६॥ ॐ यो वःशि वतमोरसस्तस्यभाज यतेहनः। उशतीरिवमातरः॥९७॥ ॐ तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ। आपोजनयथाचनः॥९८॥ जलग्रहण-निषेचनमन्त्रः–ॐ सुमित्रियानऽआपऽओषधयः सन्तुदुर्म्मित्रियास्तस्मैसन्तुयोऽस्म्मान्द्वेष्टियञ्चवयं द्विष्म्मः॥९९॥ अघमर्षणमन्त्रः–ॐ द्रुपदादिव मुमुचानःस्विन्नःस्नातोमलादिव। पूतम्पवित्रेणेवाज्ज्यमापःशुन्धन्तुमैनसः॥१००॥ उपस्थानमन्त्राः–ॐ उद्वयन्तमसस्परिस्वःपश्यन्तऽउत्तरम्। देवन्देवत्रासूर्य्यमगन्मज्ज्योतिरुत्तमम्॥१०१॥ ॐ उदुत्यञ्जातवेदसन्देवं वहन्तिकेतवः। दृशेविश्श्वायसूर्य्यम्॥१०२॥ ॐ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यवरुणस्याग्ग्नेः॥१०३॥ सूर्यप्रदक्षिणामन्त्रः–ॐ विश्श्वतं


शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता ४४

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता ४५

श्चक्षुरुतव्विश्श्वतोमुखोव्विश्श्वतोबाहुरुतव्विश्श्वत
स्प्पात्। सम्बाहुब्भ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजन
यन्देवऽएकः॥१०४॥ जपनिवेदनमन्त्रः—ॐ देवा
गातुविदोगातुं व्वित्त्वागातुमित। मनसस्पतऽइमन्देव
यज्ञꣳ स्वाहाव्वातेधाः॥१०५॥ तपर्णमन्त्रः—ॐ
पवित्त्रैस्थोव्वैष्णव्व्यौसवितुर्व्वः प्प्रसवऽउत्त्पुनाम्म्य
च्छिद्द्रेणपवित्त्रेणसूर्य्यस्यरश्मिभिः। तस्यतेपवित्त्र
पतेपवित्त्रपूतस्ययत्त्कामः पुनेतच्छकेयम्॥१०६॥





विश्वेदेवावाहनमन्त्राः—ॐ व्विश्वेदेवासऽआगतश्शृणुता
मऽइमꣳ हवम्। एदं बर्हिर्न्निषीदत॥१०७॥ ॐ व्विश्वे
देवाः शृणुतेमꣳ हवम्मेयेऽअन्तरिक्षेयऽउपद्द्यविष्ठ।
येऽअग्निजिह्वाऽउतवायजत्त्राऽआसद्यास्मिन्बर्हिषि
मादयद्ध्वम्॥१०८॥ पितृमन्त्राः—ॐ उशन्तस्त्वानि
धीमह्युशन्तः समिधीमहि। उशन्नुशतऽआवहपितॄन्ह
विषेऽअत्तवे॥१०९॥ ॐ उदीरतामवरऽउत्परास
ऽउन्मध्यमाः पितरः सोम्यासः। असुंय्यऽईयुरवृका

ऽऋतुज्ञास्तेनोऽवन्तुपितरोहवेषु॥११०॥ ॐ अङ्गिरसो नःपितरोनवग्ग्वाऽअथर्वाणोभृगवःसोम्मयासः। तेषां व्वयꣳसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम॥१११॥ ॐ आयन्तु नःपितरःसोम्यासोऽग्निष्वात्ताःपथिभि र्द्देवयानैः। अस्मिन्न्यज्ञेस्वधयामदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्म्मान्॥११२॥ ॐ ऊर्ज्जं व्वहन्तीरमृतं घृतं पयःकीलालं परिस्रुतम्। स्वधास्थतर्प्पयतमे पितॄन्॥११३॥ ॐ पितृब्भ्यःस्वधायिब्भ्यःस्वधा



नमःपितामहेब्भ्यःस्वधायिब्भ्यःस्वधानमःप्रपि तामहेब्भ्यःस्वधायिब्भ्यःस्वधानमः॥११४॥ ॐ अक्षन्पितरोऽमीमदन्तपितरोऽतीतृपन्तपितरःपितरः शुन्धद्ध्वम्॥११५॥ येचेहपितरोयेचनेहयाँश्श्च व्विद्मयाँ२उचन प्र विद्म। ॐ त्वं व्वेत्थयतितेजात वेदः स्वधाभिर्य्यज्ञꣳसुकृतञ्जुषस्व॥११६॥ ॐ नमो वः पितरो रसाय नमो वःपितरःशोषाय नमो वः पितरो जीवाय नमो वःपितरःस्वधायैनमो वःपितरोघोराय

नमो वः पितरोमन्न्यवेनमो वः पितरः पितरोनमोवो
गृहान्नः पितरोदत्तसतोवः पितरोदेष्मैतद्वः पितरो
व्वासः ॥११७॥ ॐ आधत्तपितरोगर्ब्भङ्कुमारं
पुष्करस्त्रजम्। यथेहपुरुषोऽसत्॥११८॥ अर्घ्य-
मन्त्राः—ॐ ब्ब्रह्मजज्ञानं प्प्रथमं पुरस्ताद्विसीमतः
सुरुचोव्वेनऽआवः। सबुध्न्याऽउपमाऽअस्यविष्ठाः
सतश्च्चयोनिमसतश्च्चव्विवः॥११९॥ ॐ इदं व्विष्णु
र्व्विचक्क्रमेत्रेधानिदधेपदम्। समूढमस्यपाᳪसुरे



स्वाहा ॥१२०॥ ॐ नमस्तेरुद्रमन्न्यवऽउतोतऽइषवे
नमः। बाहुब्भ्यामुततेनमः॥१२१॥ ॐ तत्सवितुर्व्व
रैण्ण्यंभर्गोदेवस्यधीमहि। धियोयोनः प्प्रचोद
यात्॥१२२॥ ॐ मित्रस्यचर्षणीधृतोवोदेवस्यसा
नसि। द्द्युम्मनश्चित्रश्श्रवस्तमम् ॥१२३॥ ॐ इमं
मेव्वरुणश्श्रुधीहवमद्याचमृडय। त्वामवस्यु
राचके॥१२४॥ सूर्योपस्थानमन्त्राः—ॐ अदृश्श्रमस्य
केतवोव्विरश्म्मयोजनाँ२ऽअनु। बभ्राजन्तोऽअग्ग्नयो

यथा। उपयामगृहीतोऽसि सूर्य्याय त्त्वा भ्राजायैषते
योनिः सूर्य्याय त्त्वा भ्राजाय। सूर्य्य भ्राजिष्ठ भ्रा
जिष्ठस्त्वन्देवेष्ष्वसि भ्राजिष्ठोहम्मनुष्ष्येषु भूया
सम्॥१२५॥ ॐ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धो
तावेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्यो
मसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत्॥१२६॥
मुखविमार्जनमन्त्रः—ॐ सम्वर्चसासन्तनूभिरगन्म
हि मनसासꣳ शिवेन। त्त्वष्टासुदत्रोविदधातुरायोनु

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता ५२



मार्ष्टुतन्न्वोयद्विलिष्टम्॥१२७॥ विसर्जनमन्त्रः—
ॐ देवागातुविदोगातुंव्वित्त्वागातुमित। मनसस्पत
ऽइमन्देवयज्ञꣳ स्वाहाव्वाते धाः॥१२८॥ स्वस्ति-
वाचनमन्त्राः—हरिः[1] ॐ आनोभद्राः क्क्रतवोयन्तुव्विश्श्व
तोऽदब्धासोऽअपरीतासऽउद्भिदः। देवानोयथासदमिद्वृ

---

१. मन्त्रादौ सर्वत्र प्रणवः प्रयोक्तव्यः मन्त्रारम्भे विरामे च यागहोमार्चनादिष्विति शाट्यायनः। 'यज्ञदानतपः स्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोमदेवपित्र्यमन्त्रोच्चरिणब्रह्मादीनि प्रणवमुच्चार्य प्रवर्त्तयेदिति दाल्भ्यपरिशिष्ट च—ब्रह्मयज्ञो जपो होमो देवर्षि-पितृकर्म च। अनोङ्कृत्य कृतं सर्वं न भवेत्सिद्धिकारककम्। तेन प्रतिमन्त्रं प्रणवोच्चारणं कर्त्तव्यम्। अपितु एकविनियोगे युक्तत्वान्मन्त्राणामादावेव प्रणवोच्चारणं कर्त्तव्यं न मध्येऽपि। अस्य पृथिग्विधित्वान्मन्त्रेण सह न सन्धिः। पृथग्विधानेन सह सन्धिर्न भवतीत्युपपादितं त्विषिमान् ( ३।३४ ) इति सूत्रे कर्कोपाध्यायैः। एवमध्याहारस्यापि लौकिकत्वान्मन्त्रेण सह सन्ध्यभाव इत्यपि प्रतिपादितं सन्त इति प्रतिमन्त्रम् ( ६।४।२ ) इति सूत्रे तैरेव।

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता ५३

ध्येऽअसन्नप्प्रायुवोरक्षितारौ दिवे दिवे॥१२९॥ देवानां भद्द्रासुमतिर्र्ऋजूयतान्देवानांᳬरातिरभिनो निर्वर्त्तताम्। देवानांᳬसख्यमुपसेदिमाव्वयन्देवान आयुः प्प्रातिरन्तुजीवसे॥१३०॥ तान्पूर्व्वयानिविदाहूमहेव्वयं भगम्मित्त्रमदितिन्दक्षमस्त्रिधम्। अर्य्यमणं व्वरुणᳬ सोममश्श्विनासरस्वती नः सुभगामयस्क्करत्॥१३१॥ तन्नो व्वातो मयोभुव्वातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः। तदग्रावाणःसोमसुतोमयोभुवस्तदश्श्विना



शृणुतन्धिष्ण्यायुवम्॥१३२॥ तमीशानञ्जगतस्तस्त्थुषस्प्पतिन्धियञ्जिन्न्वमवसेहूमहेव्वयम्। पूषानोयथाव्वेदसामसद्वृधेरक्षितापायुरदब्ध्धःस्वस्तये॥१३३॥स्वस्तिनऽइन्द्रोव्वृद्धश्श्रवाःस्वस्तिनः पूषाव्विश्श्ववेदाः। स्वस्तिनस्ताक्र्ष्योऽअरिष्ट्टनेमिःस्वस्तिनोबृहस्प्पतिर्द्दधातु॥१३४॥ पृषदश्श्वामरुतःपृश्निमातरःशुभंय्यावानोव्विदथेषुजग्मयः। अग्निजिह्वामनवःसूरचक्षसोव्विश्श्वेनो देवाऽअवसागमन्निह॥१३५॥ भद्द्रङ्कर्ण्णेभिःशृणु

यामदेवाभद्द्रम्पश्येमाक्षभिर्य्यजत्राः। स्थिरैरङ्गैस्तु
ष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितम्य्यदायुः॥१३६॥
शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्क्राजरसन्तनू
नाम्। पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषता
युर्ग्गन्तोः॥१३७॥ अदितिर्द्यौरदितिरन्तरिक्षमदिति
र्म्मातासपितासपुत्रः। विश्वेदेवाऽअदितिः पञ्चजना
ऽअदितिर्ज्जातमदितिर्ज्जनित्वम्॥१३८॥ द्यौः शान्ति
रन्तरिक्षꣳशान्तिः प्पृथिवीशान्तिरापः शान्तिरोष



धयः शान्तिः। व्वनस्प्पतयः शान्तिर्व्विश्वेदेवाः शान्ति
र्ब्रह्मशान्तिः सर्व्वꣳशान्तिः शान्तिरेवशान्तिः सामाशान्ति
रेधि॥१३९॥ [1]यतोयतः समीहसेततोनोऽअभयङ्कुरु।
शन्नः कुरुप्प्रजाभ्योऽभयन्नः पशुभ्यः॥१४०॥
पूजनमन्त्राः–प्रतिष्ठामन्त्रः–ॐ मनो जूतिर्ज्जुषता
माज्ज्यस्यबृहस्प्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳ
समिमन्दधातु। व्विश्वेदेवासऽइहमादयन्तामोँ३प्प्र

१. हे परमात्मन् यतोयतो यस्माद्यस्माद्दुश्चरितात् अस्मास्वपकर्तुं त्वं समीहसे। ततस्ततो नोऽस्माकमभयं कुरु। किञ्च नोऽस्माकं प्रजाभ्यः शं कुरु। नोऽस्माकं पशुभ्योऽभयं भीत्यभावं कुरु (३६-२२)

तिष्ठ्ठ॥१४१॥ आसनमन्त्रः—ॐ पुरुषऽएवेदꣳ सर्व्वँय्यद्भूतँय्यच्चभाव्यम्। उतामृतत्त्वस्येशानो यदन्नेनातिरोहति॥१४२॥ पाद्यमन्त्रः—ॐ एतावानस्यमहिमातोज्ज्यायाँश्चपूरुषः। पादोऽस्यव्विश्वा भूतानित्रिपादस्यामृतन्दिवि॥१४३॥ अर्घमन्त्रः—ॐ त्रिपादूर्द्ध्वऽउदैत्पुरुषःपादोऽस्येहाभवत्पुनः। ततोव्विष्वङ्व्यक्क्रामत्साशनानशनेऽअभि॥१४४॥ आचमनीयमन्त्रः—ॐ ततो व्विराडजायत व्विराजो



अधिपूरुषः। सजातोऽअत्त्यरिच्च्यतपश्चाद्भूमिमथोपुरः॥१४५॥ स्नानमन्त्रः—ॐ तस्माद्यज्ञात्सर्व्वहुतःसम्भृतं पृषदाज्ज्यम्। पशूँस्ताँश्चक्क्रेव्वायव्व्यानारण्ण्याग्ग्राम्म्याश्चये॥१४६॥ पञ्चामृतस्नान-मन्त्रौ—ॐ पञ्चनद्द्यः सरस्वतीमपियन्तिसस्त्रोतसः। सरस्वतीतुपञ्चधासोदेशेऽभवत्सरित्॥१४७॥ ॐ घृतेनसीतामधुनासमज्ज्यताव्विश्वैर्द्देवैरनुमताम् रुद्भिः। ऊर्ज्जस्वतीपयसापिन्न्वमानास्म्मान्सीते

पयसाब्भ्यावर्वृत्स्व॥१४८॥ दुग्धस्नानमन्त्रः—ॐ पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः। पयस्वतीः प्प्रदिशःसन्तुमह्यम्॥१४९॥ दधिस्नान-मन्त्रः—ॐ दधिक्क्राब्णोऽअकारिषञ्जिष्णोरश्श्वस्यवाजिनः। सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत्॥१५०॥ घृतस्नानमन्त्रः—ॐ घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम। अनुष्ष्वधमावहमादयस्वस्वाहाकृतम्वृषभवक्षिहव्यम्॥१५१॥





मधुस्नानमन्त्राः—ॐ मधुव्वाताऽऋतायतेमधुक्षरन्तिसिन्धवः। माद्ध्वीर्न्नःसन्त्वोषधीः॥१५२॥ मधुनक्तमुतोषसोमधुमत्पार्थिवङ्रजः। मधुद्यौरस्तुनः पिता॥१५३॥ मधुमान्नोव्वनस्प्पतिर्म्मधुमाँ२ऽअस्तुसूर्य्यः। माद्ध्वीर्ग्गावोभवन्तु नः॥१५४॥ शर्करा-स्नानमन्त्रः—ॐ अपांरसमुद्वयसङ्सूर्य्येसन्तङ्समाहितम्। अपांरसस्ययोरसस्तम्वोगृह्णाम्म्युत्तममुपयामगृहीतोऽसीन्द्रायत्त्वजुष्टङ्गृह्णाम्म्येषतेयोनि

रिन्द्रायत्त्वाजुष्ट्टतमम्॥१५५॥ गन्धोदकस्नान-
मन्त्रः—ॐ गन्धर्व्वस्त्वाव्विश्श्वावसुः परिदधातु
व्विश्श्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्ग्निरिडऽ
ईडितः॥१५६॥ उद्धर्तनस्नानमन्त्रः—ॐ अꣳशुना
तेऽअꣳशुः पृच्च्यताम्परुषापरुः। गन्धस्तेसोममवतु
मदायरसोऽअच्च्युतः॥१५७॥ शुद्धोदकस्नान-
मन्त्रः—ॐ शुद्धवालः सर्व्वशुद्धवालोमणिवालस्त
ऽआश्श्विनाः श्येतः श्येताक्षोऽरुणस्तेरुद्रायपशुपतये



कर्ण्णायामाऽअवलिप्प्तारौद्रानभोरूपाः पार्ज्ज
न्न्याः॥१५८॥ वस्त्रमन्त्रौ—ॐ तस्म्माद्यज्ञात्सर्व्व
हुतऽऋचः सामानिजज्ञिरे। छन्दाꣳसिजज्ञिरेतस्म्माद्य
जुस्तस्म्मादजायत॥१५९॥ ॐ सुजातोज्ज्योतिषा
सहशर्म्मव्वरूथमासदत्स्वः। व्वासोऽअग्ग्नेव्विश्श्वरूपꣳ
संव्ययस्वव्विभावसो॥१६०॥ यज्ञोपवीतमन्त्रौ—
ॐ यज्ञो पवीतं परमं पवित्रं प्रजापतेर्यत्सहजं
पुरस्तात्। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं

बलमस्तुतेजः। यज्ञोपवीतमसियज्ञस्यत्त्वायज्ञोपवी
तेनोपनह्यामि॥१६१॥ ॐ तस्म्मादश्श्वाऽअजायन्त
येकेचौभयादतः। गावौहजज्ञिरेतस्म्मात्तस्म्माज्जाता
अजावयः॥१६२॥ गन्धमन्त्रौ–ॐ तं य्यज्ञं
बर्हिषिप्प्रौक्षन्न्पुरुषञ्जातमग्ग्रतः। तेनदेवाऽअय
जन्तसाद्ध्याऽऋषयश्श्चये॥१६३॥ *ॐ त्वाङ्ग
न्धर्व्वाऽअखनँस्त्वामिन्द्रस्त्वां बृहस्प्पतिः। त्वामौषधे

* हे ओषधे गन्ध गन्धर्वास्त्वामखनन् न्यवेदयन्। इन्द्रस्त्वां न्यवेदयत् बृहस्पतिश्च त्वां न्यवेदयत् सोमो राजा त्वां न्यवेदयत्। किं च यक्ष्माद्रोगादमुच्यत मुक्तोऽभूदिति गन्धप्रशंसा वाक्यार्थः।





सोमोराजाव्विद्वान्न्यक्ष्मादमुच्च्यत॥१६४॥ भस्म-
मन्त्रः–ॐ प्रसद्यभस्म्मनायोनिमपश्श्चपृथिवीमग्ग्ने।
सङ्सृज्ज्यमातृभिष्ट्वञ्ज्योतिष्म्मान्न्पुनरासदः॥१६५॥
अक्षतमन्त्रः–ॐ अक्षन्नमीमदन्तह्यवप्प्रियाऽअधूषत।
अस्तौषतस्वभानवोव्विप्प्रानविष्ठ्ठयामतीयोजान्विन्द्र
तेहरी ॥१६६॥ सिन्दूरमन्त्रः–सिन्धौरिवप्प्राद्ध्वने
शूघनासोव्वातप्प्रमियः पतयन्तियह्वाः। घृतस्ययधाराऽअ
रुषोनव्वाजीकाष्ठ्ठाभिन्दन्नूर्म्मिभिः पिन्न्वमानः॥१६७॥

बलमस्तुतेजः। यज्ञोपवीतमसियज्ञस्यत्त्वायज्ञोपवी
तेनोपनह्यामि॥१६१॥ ॐ तस्म्मादश्श्वाऽअजायन्त
येकेचौभयादतः। गावोहजज्ञिरेतस्म्मात्तस्म्माज्जाता
अजावयः॥१६२॥ गन्धमन्त्रौ—ॐ तं य्यज्ञं
बर्हिषिप्प्रौक्षन्न्पुरुषञ्जातमग्ग्रतः। तेनदेवाऽअय
जन्तसाद्ध्याऽऋषयश्श्चये॥१६३॥ *ॐ त्वाङ्ग
न्धर्व्वाऽअखनँस्त्वामिन्द्रस्त्वां बृहस्प्पतिः। त्वामोषधे

* हे ओषधे गन्ध गन्धर्वास्त्वामखनन् न्यवेदयन्। इन्द्रस्त्वां न्यवेदयत् बृहस्पतिश्च त्वां न्यवेदयत् सोमो राजा त्वां न्यवेदयत्। किं च यक्ष्माद्रोगादमुच्यत मुक्तोऽभूदिति गन्धप्रशंसा वाक्यार्थः।



सोमोराजाव्विद्वान्न्यक्ष्मादमुच्च्यत॥१६४॥ भस्म-
मन्त्रः—ॐ प्रसद्यभस्म्मनायोनिमपश्श्चपृथिवीमग्ने।
सꣳसृज्ज्यमातृभिष्ट्वञ्ज्योतिष्म्मान्न्पुनरासदः॥१६५॥
अक्षतमन्त्रः—ॐ अक्षन्नमीमदन्तह्यवप्प्रियाऽअधूषत।
अस्तोषतस्वभानवोव्विप्प्रानविष्ठयामतीयोजान्विन्द्र
तेहरी॥१६६॥ सिन्दूरमन्त्रः—सिन्धोरिवप्प्राद्ध्वने
शूघनासोव्वातप्प्रमियःपतयन्तियह्वाः। घृतस्य्यधाराऽअ
रुषोनव्वाजीकाष्ठाभिन्दन्नूर्म्मिभिःपिन्न्वमानः॥१६७॥

पुष्पमन्त्रौः—ॐ यत्पुरुषं व्यदधुःकतिधाव्यकल्पयन्।
मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्च्येते॥१६८॥
ॐ ओषधीःप्प्रतिमोदद्ध्वं पुष्प्पवतीःप्प्रसूवरीः।
अश्श्वाऽइवसजित्त्वरीर्व्वीरुधः पारयिष्ष्णवः॥१६९॥
बिल्वमन्त्रः—ॐ नमोबिल्म्मिनेचकवचिनेचनमो
व्वर्म्मिणेचव्वरूथिनेचनमःश्श्रुतायचश्श्रुतसेनायचन
मोदुन्दुब्भ्यायचाहनन्न्यायचनमोधृष्णवे॥१७०॥
तुलसीमन्त्रः—ॐ इदं व्विष्णुर्व्विचक्क्रमेत्रेधानिदधे



पदम्। समूढमस्यपाᳪंसुरेस्वाहा॥१७१॥ दूर्वा-
मन्त्रः—ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुष
स्प्परि। एवानोदूर्व्वेप्प्रतनुसहस्त्रेणशतेनच॥१७२॥
सुगन्धितद्रव्यमन्त्रः—ॐ अहिरिवभोगैःपर्य्येतिबाहु
ञ्ज्यायाहेतिम्प्परिबाधमानः। हस्तग्घ्नोव्विश्श्वाव्वयुना
निव्विद्वान्पुमान्पुमाᳪंसम्प्परिपातुव्विश्श्वतः॥१७३॥
धूपमन्त्रौ—ॐ ब्ब्राह्मणोऽस्यमुखमासीत् बाहूराज
न्न्यःकृतः। ऊरूतदस्ययद्वैश्श्यःपद्भ्याᳪंशूद्रो

अजायत॥१७४॥ ॐ धूरसि॒धूर्व्व॒धूर्व्वन्तं॒ धूर्व्व॒तं योऽस्म्मान्धूर्व्वति॒तन्धूर्व्वयंव्व॒यन्धूर्व्वामः। दे॒वाना॑मसि॒वह्नि॑तमुꣳसस्निन्तमम्पप्प्रितम॒ञ्जुष्ष्टतमन्देवहूतमम्॥१७५॥ दीपमन्त्रौ—ॐ च॒न्द्रमा॒मनसोजा॒तश्चक्षोःसूर्य्यो अजायत। श्रोत्राद्वायुश्चप्प्राणश्चमुखादग्निरजायत॥१७६॥ ॐ अ॒ग्निर्ज्ज्योतिषा॒ज्ज्योतिष्म्मान्रुक्म्मोव्वर्च्चसा॒व्वर्च्चस्वान्। स॒ह॒स्त्र॒दाऽअसिस॒हस्त्राय त्वा॥१७७॥ नैवेद्यमन्त्रौ—ॐ नाभ्याऽआसीद॒न्तरिक्षꣳशीर्ष्णोद्यौःसमवर्त्तत। प॒द्भ्याम्भूमि॒र्द्दिश॒ःश्रोत्रा॒त्तथाल॒ोकाँ२॥अकल्प्पयन्॥१७८॥ ॐ अन्नपतेऽन्नस्यनोदेह्यनमी॒वस्यशु॒ष्मिणः। प्रप्प्रदा॒तारन्तारिष॒ऽऊर्ज्जन्नोधेहिद्विपद॒चतुष्पदे॥१७९॥ धतूरफलमन्त्रः—ॐ कार्षिरसिसमु॒द्रस्य॒त्त्वाक्षित्त्याऽउन्नयामि। समापोऽअ॒द्भिरग्गमत॒समोषधीभि॒रोषधीः॥१८०॥ ताम्बूलमन्त्रः—ॐ उ॒तस्म्मास्य॒द्रवतस्तुरण्य॒तःपु॒र्णन्नवेरनुवातिप्प्रगर्द्धिनः। श्ये॒न

स्यैवद्ध्रजतोऽअङ्कुसम्परिंदधिक्क्राब्णं÷सुहोर्ज्जात
रिंत्रतुःस्वाहा॥१८१॥ फलमन्त्रः—ॐ याःफुलिनी
र्य्याऽअफुलाऽअपुष्प्पायाश्श्च्पुष्प्पिणीः। बृहुस्प्पति
प्रसूतास्तानोमुञ्चन्त्वꣳहसः॥१८२॥ दक्षिणामन्त्रौ—
ॐ हिरण्यगर्ब्भःसमवर्त्ततागग्रैभूतस्यजातःपतिरेक
ऽआसीत्। सदाधारपृथिवीन्द्यामुतेमाङ्कस्म्मैदेवाय
हविषाविधेम॥१८३॥ ॐ यद्दत्तंय्यत्परादानंय्य
त्पूर्त्तंय्याश्श्चदक्षिणाः। तदग्निर्वैश्श्वकर्म्मणःस्वर्द्देवे





षुनोदधत्॥१८४॥ आरार्त्तिक्यमन्त्राः—ॐ आ रात्रि
पार्थिवꣳरजः पितुरप्प्रायिधामभिः। दिवःसदाꣳसि
बृहतीविवितिष्ठुसऽआत्त्वेषम्वर्त्ततेतमः॥१८५॥ ॐ
इदꣳहविःप्प्रजननम्मेऽअस्तुदशवीरꣳसर्व्वगणꣳस्व
स्तयै। आत्मसनिप्प्रजासनिपशुसनिलोकसन्न्य
भयसनि। अग्निःप्प्रजाम्बहुलाम्मैकरोत्वन्नम्पयोरेतो
अस्म्मासुधत्त॥१८६॥ ॐ ये दैवासोदिव्व्येकादश
स्त्थपृथिव्व्यामद्ध्येकादशस्त्थ। अप्प्सुक्षितोमहि

नैकादशस्त्थतेदैवासोयज्ञमिमञ्जुषद्ध्वम् ॥१८७॥
पुष्पाञ्जलिमन्त्राः—ॐ यज्ञेनयज्ञमयजन्तदेवास्तानि
धर्म्माणिप्प्रथमान्यासन्। तेहनाकम्महिमानःसचन्त
यत्रपूर्व्वेसाद्ध्याःसन्तिदेवा ॥१८८॥ ॐ राजा
धिराजायप्रसह्यसाहिनेनमोवयंवैश्रवणायकुर्महे। समे
कामान्कामकामायमह्यंकामेश्वरोवैश्रवणोददातु।
कुवेरायवैश्रवणाय महाराजायनमः॥१८९॥ ॐ
स्वस्तिसाम्राज्यम्भौज्यम्स्वाराज्यम्वैराज्यम्पार





मेष्ठ्यम्राज्यम्महाराज्यम्माधिपत्यमयंसमन्तपर्या
यीस्यात्सार्वभौमःसार्वायुषआन्तादापरार्धात्पृथिव्यै
समुद्रपर्य्यन्तायाऽएकरडितितदप्येषश्लोकोऽभिगीतो
मरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे। आवीक्षित
स्यकामप्रेर्विश्वेदेवाःसभासदइति॥१९०॥ ॐ व्विश्श्व
तश्श्चक्षुरुतव्विश्श्वतोमुखोव्विश्श्वतोबाहुरुतव्विश्श्व
तस्प्पात्। सम्बाहुब्भ्यान्धमतिसम्पतत्रैर्द्यावाभूमी
जनयन्देवऽएकः॥१९१॥ प्रदक्षिणामन्त्रौ—ॐ सप्ता

स्यासन्न्परिधयस्त्रिःसप्तसमिधःकृताः। देवायद्यज्ञन्त
न्वानाऽअबध्नन्न्पुरुषम्पशुम्॥१९२। ॐ ये तीर्त्थानि
प्रचरन्तिसृकाहस्तानिषङ्गिणः। तेषाᳬसहस्रयोजने
ऽवधन्वानितन्मसि ॥१९३॥ कलशस्थापनमन्त्राः–
तत्रादौ भूमिस्पर्शमन्त्रः–ॐ भूरसिभूमिरस्यदिति
रसिव्विश्श्वधायाव्विश्श्वस्यभुवनस्यधर्त्री। प्पृथिवीं
य्यच्छप्पृथिवीन्दृᳬहपृथिवीम्माहिᳬसीः॥१९४॥
धान्यप्रक्षेपणमन्त्रः–ॐ धान्न्यमसिधिनुहिदेवान्प्रा



णायत्त्वोदानायत्त्वाव्व्यानायत्त्वा। दीर्ग्घामनुप्प्रसितिमा
युषेधान्देवोवःसविताहिरण्ण्यपाणिःप्प्रतिगृब्भ्णा
त्त्वच्छिद्द्रेणपाणिनाचक्क्षुषेत्त्वामहीनाम्पयोऽसि॥१९५॥
कलशस्थापनमन्त्रः–ॐ आजिग्घ्रकलशम्मह्यात्त्वा
व्विशन्त्विन्दवः। पुनरूर्ज्जानिवर्त्तस्वसानःसहस्रन्धुक्ष्वो
रुधारापयस्वतीपुनर्म्माव्विशताद्द्रयिः॥१९६॥ जल-
प्रक्षेपणमन्त्रः–ॐ व्वरुणस्योत्तम्भनमसिव्वरुणस्य
स्कम्भसर्ज्जनीस्त्थोव्वरुणस्यऽऋतसदन्यसिव्वरुणस्य

ऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद॥१९७॥

फलमन्त्रः—ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वंहसः॥१९८॥ पञ्चरत्नमन्त्रः—ॐ परिवाजपतिःकविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानिदाशुषे॥१९९॥

हिरण्यमन्त्रः—ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्यजातः पतिरेकऽआसीत्। सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम॥२००॥



गन्धमन्त्रः—ॐ त्वाङ्गन्धर्व्वाऽअखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः। त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत॥२०१॥ ओषधीमन्त्रः—ॐ याऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगम्पुरा। मनैनुबभ्रूणामहंशतन्धामानिसप्तच॥२०२॥ मृत्तिकामन्त्रः—ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी। यच्छानः शर्मसप्रथाः॥२०३॥ दूर्वामन्त्रः—ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि। एवानोदूर्वेप्रतनु

सहस्त्रैणशतेनच॥२०४॥ पञ्चपल्लवमन्त्रः—ॐ अश्श्वत्थेवोनिषदनम्पर्ण्णेवोव्वसतिष्कृता। गोभाज ऽइत्किलासथयत्सनवथपूरुषम्॥२०५॥ धान्य-मन्त्रः—ॐ पूर्ण्णादर्व्विपरापतसुपूर्ण्णापुनरापत। व्वस्नेवव्विक्क्रीणावहाऽइषमूर्ज्जꣳशतक्क्रतो॥२०६॥ आवाहनमन्त्रः—ॐ तत्त्वायामिब्ब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानो हविर्ब्भिः। अहेडमानोव्वरुणेहबोद्ध्युरुशꣳसमानऽआयुः प्रमोषीः॥२०७॥



पुण्याहवाचनमन्त्राः—ॐ सवितात्त्वासवानाꣳ सुवतामग्ग्निर्ग्गृहपतीनाꣳसोमोव्वनस्प्पतीनाम्। बृहस्प्पतिर्व्वाचऽइन्द्रोज्ज्यैष्ठ्यायरुद्रः पशुब्भ्योमित्रः सत्योव्वरुणोधर्म्मपतीनाम्॥२०८॥ ॐ नतद्रक्षाꣳसिनपिशाचास्तरन्तिदेवानामोजः प्रथमजꣳह्येतत्। योबिभर्त्तिदाक्षायणꣳहिरण्ण्यꣳसदेवेषुकृणुतेदीर्ग्घमायुः समनुष्ष्येषुकृणुतेदीर्ग्घमायुः॥२०९॥ ॐ उच्चातैजातमन्धसोदिविसद्भूम्याददे। उग्ग्रꣳशर्म्ममहि

विशेष—पुण्याहवाचन के बाद अभिषेक करने के लिए इस पुस्तक की पृष्ठ सं० १९४ को देखें।

श्श्रवः॥२१०॥ ॐ पुनन्तुमादेवजनाः पुनन्तुमनसा धियः। पुनन्तुविश्श्वाभूतानिजातवेदः पुनीहिमा॥२११॥ ॐ यथेमां व्वाचङ्कल्याणीमावदानिजनेब्भ्यः। ब्ब्रह्म राजन्न्याब्भ्याᳬ शूद्द्रायचार्य्यायचस्वायचारणायच। प्प्रियोदेवानान्दक्षिणायैदातुरिहभूयासमयम्मेकामः समृद्ध्यतामुपमादोनमतु॥२१२॥ ॐ सत्रस्यऽऋद्धि रस्यगन्मज्ज्योतिरमृताऽअभूम। दिवम्पृथिव्व्याऽ अद्ध्यारुहामाविदामदेवाँन्त्स्वज्ज्योतिः॥२१३॥



ॐ स्वस्तिनऽइन्द्रोव्वृद्धश्श्रवाः स्वस्तिनः पूषाविश्श्ववेदाः। स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्प्पतिर्द्दधातु॥२१४॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्श्विनौव्यात्तम्। इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण॥२१५॥ [1]षोडश-मातृकामन्त्राः—तत्रादौ गौरीमन्त्रः—ॐ आयं गौः पृश्निरक्रमीदसदन्मातरंपुरः। पितरंचप्प्रयन्त्स्वः॥२१६॥

१. गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः॥
धृतिः पुष्टिस्तथा तुष्टिः आत्मनः कुलदेवताः। गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश॥
(आह्निक सूत्रावली)

पद्मामन्त्रः—ॐ पावकानः सरस्वतीव्वाजेभिर्व्वाजिनी वती। यज्ञम्वष्टुधियावसुः॥२१७॥ शचीमन्त्रः—ॐ निवेशनः सङ्गमनोव्वसूनां व्विश्वारूपाभिचष्ट्रेश चीभिः। देवऽईवसवितासत्त्यधर्म्मेन्द्रोनतस्त्थौसमरे पथीनाम्॥२१८॥ मेधामन्त्रः—ॐ मेधाम्मेव्वरुणोद दातुमेधामग्निः प्प्रजापतिः। मेधामिन्द्रश्श्चव्वायुश्श्च मेधान्धातादद दातुमेस्वाहा॥२१९॥ सावित्रीमन्त्रः—ॐ सवितात्त्वासवानाᳮ सुवतामग्निर्ग्गृहपतीनाᳮ





सोमोव्वनस्प्पतीनाम्। बृहस्प्पतिर्व्वाचऽइन्द्रोज्ज्यै ष्ठ्यायरुद्रः पशुब्भ्योमित्रः सत्योव्वरुणोधर्म्मपती नाम्॥२२०॥ विजयामन्त्रः—ॐ प्प्राणायस्वाहा पानायस्वाहाव्व्यानायस्वाहा। ॐ अम्बेऽअम्बिके ऽम्बालिकेनमानयतिकश्श्चन। ससस्त्यश्श्वकः सुभ द्रिकाङ्काम्पीलवासिनीम्॥२२१॥ जयामन्त्रः—ॐ बह्वीनां पिताबहुरस्यपुत्रश्श्चिश्श्चाकृणोतिसमनाव गत्य। इषुधिः सङ्काः पृतनाश्श्चसर्व्वाः पृष्ठेनिनद्धोजय

तिप्प्रसूतः ॥२२२॥ देवसेनामन्त्रः—ॐ इन्द्रऽआसा न्नेताबृहस्प्पतिर्द्दक्षिणायज्ञः पुरऽएतुसोमः। देवसेनानां भिभञ्जतीनाञ्जयन्तीनां मरुतोयन्त्वग्ग्रम्॥२२३॥

स्वधामन्त्राः—ॐ पितृब्भ्यः स्वधायिब्भ्यः स्वधानमः पितामहेब्भ्यः स्वधायिब्भ्यः स्वधानमः प्प्रपितामहेब्भ्यः स्वधायिब्भ्यः स्वधानमः।अक्षन्पितरोऽमीमदन्तपितरोऽतीतृपन्त पितरः पितरः शुन्धद्ध्वम्॥२२४॥

स्वाहामन्त्रः—ॐ स्वाहाप्प्राणेब्भ्यः साधिपति





केब्भ्यः। पृथिव्व्यैस्वाहाग्ग्नयेस्वाहान्तरिक्षायस्वाहा व्वायवेस्वाहा। दिवेस्वाहासूर्य्यायस्वाहा॥२२५॥

मातृमन्त्रः—ॐ अनाधृष्टापुरस्तादग्ग्नेराधिपत्यऽ आयुर्म्मेदाः पुत्रवतीदक्षिणतऽइन्द्रस्याधिपत्येप्प्रजां मैदाः। सुखदापश्श्चाद्देवस्यसवितुराधिपत्येचक्षुर्म्मेदा आश्श्रुतिरुत्तरतोधातुराधिपत्येरायस्प्पोषम्मेदाः। व्विधृतिरुपरिष्ट्टाद्बृहस्प्पतेराधिपत्यऽओजोमेदाव्विश्श्वाब्भ्योमानाष्ट्ट्राब्भ्यस्प्पाहिमनोरश्श्वासि॥२२६॥

लोकमातृमन्त्रः—ॐ रुयिश्श्चमेरायश्श्चमेपुष्टञ्चमे
पुष्टिश्श्चमेव्विभुचमेप्प्रभुचमेपूर्णञ्चमेपूर्णतरञ्च
मेकुयवञ्चमेऽक्षितञ्चमेऽन्नञ्चमेऽक्षुच्चमेयज्ञेनकल्प
न्ताम्॥२२७॥ धृतिमन्त्रः—ॐ भुद्द्रं कर्ण्णेभिःशृणु
यामदेवाभुद्द्रम्पश्येमाक्षभिर्य्यजत्राः। स्थिरैरङ्गैस्तुष्टु
वाᳫँसस्तनूभिर्व्यशेमहिदेवहितंयदायुः॥२२८॥
पुष्टिमन्त्रः—ॐ अङ्गान्न्यात्क्मन्निभिषजातदश्श्विना
त्क्मानमङ्गैःसमधात्सरस्वती। इन्द्रस्यरूपᳫँशमान्





मायुश्श्चन्द्रेणज्ज्योतिरमृतन्दधानाः॥२२९॥ तुष्टि-
मन्त्रः—ॐ जातवेदसेसुनवामसोममरातीयतोनि
दहातिवेदः। सनः पर्षदतिदुर्ग्गाणिविश्श्वानावेव
सिन्धुंदुरितात्यग्निः॥२३०॥ कुलदेवतामन्त्रः—
ॐ व्वसोः पवित्रमसिशतधारं व्वसोःपवित्रमसिसहस्त्र
धारम्। देवस्त्वासवितापुनातुव्वसोःपवित्रेणशत
धारेणसुप्प्वाकामधुक्षः॥२३१॥ [1]सप्तघृतमातृका-

१. श्रीर्लक्ष्मीर्धृतिर्मेधा स्वाहा प्रज्ञा सरस्वती। माङ्गल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः।
(आह्निक-सूत्रावली)

मन्त्राः—श्रियै मन्त्रः—ॐ मनसुः काममाकूतिं व्वाचः
सत्यमशीय। पशूनाᳬरूपमन्नस्यरसोयशः श्रीः
श्रयताम्मयिस्वाहा॥२३२॥ लक्ष्म्यै मन्त्रः—ॐ श्री
श्श्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्त्राणिरूपमश्वि
नौव्यात्तम्। इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइ
षाण॥२३३॥ धृत्यै मन्त्रः—ॐ भद्रं कण्णेभिः शृणुया
मदेवाभद्रम्पश्येमाक्षभिर्य्यजत्त्राः। स्थिरैरङ्गैस्तुष्टु
वाᳬसस्तनभिर्व्यशेमहिदेवहितंयदायुः॥२३४॥



मेधायै मन्त्रः—ॐ मेधाम्मेव्वरुणोददातुमेधामग्ग्निः
प्प्रजापतिः। मेधामिन्द्रश्चव्वायुश्चमेधान्धाताददातु
मेस्वाहा॥२३५॥ स्वाहायै मन्त्रः—ॐ प्राणायस्वाहा
अपानायस्वाहाव्यानायस्वाहाचक्षुषेस्वाहाश्रोत्त्राय
स्वाहाव्वाचेस्वाहामनसेस्वाहा॥२३६॥ प्रज्ञायै मन्त्रः—
ॐ आयं गौःपृश्निरक्रमीदसन्न्मातरम्पुरः। पितरं च
प्रयन्त्स्वः॥२३७॥ सरस्वत्यै मन्त्रः—ॐ पावका
नः सरस्वतीव्वाजेभिर्व्वाजिनीवती। यज्ञम्वष्टुधिया

वसुः ॥२३८॥ आयुष्यसूक्तजपमन्त्राः—ॐ आयुष्यं वर्च्चस्यठं रायस्पोषमौद्भिदम्। इदठं हिरण्यं वर्च्चस्व ज्जैत्रायाविशतादुमाम् ॥२३९॥ ॐ नतद्रक्षाठंसि न पिशाचास्तरन्तिदेवाना मोजः प्रथमजठं ह्येतत्। यो बिभर्त्ति दाक्षायणठं हिरण्यठं सदेवेषु कृणुते दीर्घमायुः सर्मनुष्येषु कृणुते दीर्घमायुः ॥२४०॥ ॐ यदा बध्नन्दाक्षायणा हिरण्यठं शतानीकाय सुमनस्यमानाः। तन्म आबध्नामि शतशारदायायुष्मान्जर



शुक्ल-यजुर्वेदीय-मन्त्र-संहिता ९०

दष्टिर्यथासम् ॥२४१॥ [१]नान्दीश्राद्धपितृविसर्जन-मन्त्रः—ॐ वाजेवाजेऽवतवाजिनोनोधनेषुविप्रा अमृता ऋतज्ञाः। अस्यमध्वः पिबतमादयध्वन्तृप्तायातपथिभिर्द्देवयानैः ॥२४२॥ अनुव्रजमन्त्रः—ॐ आमावाजस्यप्रसवोजगम्म्यादेमेद्यावापृथिवीविश्वरूपे। आमागन्तांपितरामातराचामासोमोऽअमृतत्वेनगम्म्यात् ॥२४३॥

१. क- यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः। पुत्रजन्म-वृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्॥ (विष्णुपुराण)
ख- कन्यापुत्रविवाहेषु प्रवेशेषु च वेश्मनः। नामकर्मणि बालानां चूडाकर्मादिके तथा॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने। नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही॥
(विष्णुपु० ३।१३।५,६)



शुक्ल-यजुर्वेदीय-मन्त्र-संहिता ९१

[1]वरणमन्त्राः—[2]आचार्यवरणमन्त्रः—ॐ बृहस्प्पते
अतियदर्य्योऽअर्हाद्द्युमद्विभातिक्क्रतुमज्जनेषु।
यद्दीदयच्छवसऽऋतप्प्रजाततदस्म्मासुद्रविणांधेहि
चित्रम्॥२४४॥ ब्रह्मवरणमन्त्रः—ॐ ब्रह्मजज्ञानम्प्रथमं
पुरस्ताद्विसीमतःसुरुचोव्वेनऽआवः। सबुध्न्याऽउपमा
ऽअस्यव्विष्ठाःसतश्श्चयोनिमसतश्श्चव्विवः॥२४५॥
सदस्यवरणमन्त्रः—ॐ सदसस्प्पतिमद्भुतम्प्रिय

१. आचार्यं प्रथमं वृत्त्वा ब्रह्माणं वृणुयात्ततः। गणेशं ऋत्विजादींश्च पूजयेत्तु विधानतः॥ (रुद्रयामल)
२. नानाविधानि कर्माणि कर्ता कारयिता च यः। सर्वधर्मविधिज्ञश्च स वै आचार्य उच्यते॥ (यज्ञमीमांसा)



मिन्द्रस्यकाम्म्यम्। सनिम्मेधामयासिषꣳ स्वाहा॥२४६॥
[1]गाणपत्यवरणमन्त्रः—ॐ गणानान्त्वागणपतिꣳ
हवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳहवामहेनिधीनान्त्वा
निधिपतिꣳहवामहेवसोमम। आहमजानिगर्ब्भध
मात्वमजासिगर्ब्भधम्॥२४७॥ [2]उपद्रष्टृवरणमन्त्रः—
ॐ ऋतयेस्तेनहृदयम्वैरहत्यायपिशुनम्विविक्त्यैक्ष
त्तारमौपद्रष्ट्र्यायानुक्षत्तारम्बलायानुचरम्भूम्नेपरिष्कन्दं

१. गणपत्य का वरण 'रुद्रयामल' ग्रन्थ में वर्णित है।
२. उपद्रष्टा का वरण 'प्रतिष्ठाकौमुदी' में वर्णित है।

प्रियायैप्रियवादिनमरिष्ट्याऽअश्वसादँ स्वर्ग्यायैलो
कायैभागदुघम्वर्षिष्ठायनाकायपरिवेष्टारम्॥ २४८॥
[1]ऋत्विग्वरणमन्त्रः—ॐ एतावद्द्रूपम्यज्ञस्ययद्देवै
र्ब्रह्मणाकृतम्। तदेतत्सर्व्वमाप्नोतियज्ञेसौत्रामणी
सुते॥ २४९॥ कर्तृकङ्कणबन्धनमन्त्रः—ॐ यदाब
ध्नन्दाक्षायणाहिरण्यँ शतानीकायसुमनस्यमानाः।
तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथा
सम्॥ २५०॥ कर्तृपत्नीकङ्कणबन्धनमन्त्रः—ॐ तम्पत्नी

१. 'यो दक्षिणादिना परिक्रीतः श्रौत-स्मार्त्तादीनि कर्माणि करोति स ऋत्विक्।' (पा०गृ०सू० 'विवृति' टीका)

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १४



भिरनुगच्छेमदेवाः पुत्रैर्ब्भ्रातृभिरुतवाहिरण्यैः।
नाकङ्गृभ्णानाः सुकृतस्यलोकेतृतीयेपृष्ठेऽअधिरो
चनेदिवः॥ २५१॥ [1]पञ्चगव्यनिर्माणमन्त्राः—ॐ तत्स
वितुर्व्वरेण्यम्भर्गोदेवस्यधीमहि। धियोयोनः प्रचोद
यात्॥ २५२॥ ॐ आप्प्यायस्वसमेतुतेव्विश्वतः सोम
व्वृष्ण्यम्। भवाव्वाजस्यसङ्गथे॥ २५३॥ ॐ दधि
क्राव्णोऽअकारिषञ्जिष्णोरश्वस्यव्वाजिनः। सुर
भिनोमुखाकरत्प्रणऽआयूँषितारिषत्॥ २५४॥

१. गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। निर्दिष्टं पञ्चगव्यन्तु पवित्रं मुनिपुङ्गवैः॥ (वशिष्ठः)

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १५

ॐ घृतम्मिमिक्षेघृतमस्युघोनिर्ग्घृतेश्श्रितोघृतम्वस्यधाम। अनुष्वधमावहमादयस्वस्वाहाकृतम्वृषभवक्षिहव्यम्॥२५५॥ ॐ देवस्यत्त्वासवितुः प्प्रसवेऽश्श्विनोर्बाहुब्भ्याम्पूष्णणोहस्ताब्भ्याम् ॥२५६॥

भूशुद्धिमन्त्रः—ॐ महीद्यौः पृथिवीचनऽइमम्ब्यज्ञम्मिमिक्षताम्। पिपृतान्नोभरीमभिः॥२५७॥ भूमिपूजन-मन्त्रः—ॐ भूरसिभूमिरस्यदितिरसिव्विश्श्वधायाव्विश्श्वस्यभुवनस्यधर्त्री। पृथिवीम्यच्छपृथिवीन्दृꣳहपृथिवीम्माहिꣳसीः॥२५८॥ दिग्रक्षणमन्त्राः—ॐ रक्षोहणं व्वलगहनं व्वैष्ष्णवीमिदमहन्तं व्वलगमुत्किरामियम्मेनिष्ट्योयममात्यौनिचखानेदमहन्तं व्वलगमुत्किरामियम्मेसमानोयमसमानोनिचखानेदमहन्तम्वलगमुत्किरामियम्मेसबन्धुर्य्यमसबन्धुर्न्निचखानेदमहन्तं व्वलगमुत्किरामियम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि॥२५९॥ ॐ रक्षोहणौवोव्वलगहनःप्प्रोक्षामिव्वैष्ष्णवान्न्रक्षोहणौवोव्वलगहनोऽवनयामि

व्वैष्ष्णुवान्न्रक्षोहणौवोव्वलगुहनोऽवस्त्तृणामिव्वैष्ष्णु वान्न्रक्षोहणौवांव्वलगुहनाऽउपदधामिव्वैष्ष्णुवीरक्षो हणौवांव्वलगुहनौपययर्ष्ठूँहामिव्वैष्ष्णुवीव्वैष्ष्णुवमसि व्वैष्ष्णुवास्त्थ॥२६०॥ ॐ रक्षसाभागोऽसिनिरस्तुᳬ रक्षऽइदमहᳬरक्षोऽभितिष्ष्ठामीदमहᳬरक्षोऽवबाध ऽइदमहᳬरक्षोऽधमन्तमौनयामि। घृतेनद्यावापृथिवी प्प्रोर्ण्णुँवाथांव्वायोव्वेस्त्तोकानामग्ग्निराज्ज्यस्यव्वेतु स्वाहास्वाहाकृतेऽऊर्ध्वनभसम्मारुतङ्गच्छतम्॥२६१॥





ॐ रक्षोहाव्विश्श्वचर्षणिरभियोनिमयौहते। द्रोणेसध स्थमासदत्॥२६२॥ रक्षोघ्नसूक्तमन्त्राः—ॐ कृणुष्ष्व पाजःप्प्रसितिन्नपृत्थ्वींय्याहिराजेवामवाँ२ऽइभेन। तृष्ष्वीमनुप्प्रसितिन्द्रूणानोस्त्तासिव्विद्ध्यरक्षसस्त पिष्ठैः॥२६३॥ ॐ तवब्भ्रमासऽआशुयापतन्त्य नुस्स्पृशधृषताशोशुचानः। तपूᳬष्ष्यग्ग्नेजुह्वापतङ्गान सन्दितोव्विसृजव्विष्ष्वगुल्काः॥२६४॥ ॐ प्रतिस्प्प शोव्विसृजतूर्ण्णितमोभवापायुर्व्विशोऽअस्याऽअदब्धः।

यो नौ दूरेऽअघशꣳसो योऽअन्त्यग्ग्ने माकिष्टे व्यथिरा दधर्षीत्॥२६५॥ ॐ उदग्ग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ२ऽओषतात्तिग्गमहेते। यो नोऽअरातिꣳ समिधान चक्क्रे नीचातन्धक्ष्यतसन्नशुष्ष्कम्॥२६६॥ ॐ ऊर्द्ध्वो भव प्प्रतिविद्ध्याद्ध्यस्म्मदाविष्ष्कृणुष्व दैव्यान्न्यग्ग्ने। अवस्थिरातनुहि यातुजूनाञ्जामिमजामिम्प्रमृणीहि शत्रून्। अग्ग्नेष्ट्वा तेजसा सादयामि॥२६७॥ पवमान-सूक्तमन्त्राः—ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा



धियः। पुनन्तु विश्श्वा भूतानि जातवेदः पुनीहि मा॥२६८॥ ॐ पवित्रेण पुनीहि मा शुक्क्रेण देव दीद्यत्। अग्ग्ने क्क्रत्वा क्क्रतूँ१ऽरनु॥२६९॥ ॐ यत्ते पवित्रमर्च्चिष्ष्यग्ग्ने विततमन्तरा। ब्रह्म तेन पुनातु मा॥२७०॥ ॐ पवमानः सो अद्य नः पवित्रेण विचर्षणिः। यः पोता स पुनातु मा॥२७१॥ ॐ उभाब्भ्यान्देव सवितः पवित्रेण सवेन च। माम्पुनीहि विश्श्वतः॥२७२॥ ॐ वैश्श्वदेवी पुनती देव्व्यागाद्यस्यामिमा बह्व्यस्तन्न्वो वीतपृष्ठाः।

तयामदन्तᳯसधमादेषुव्वयᳪस्यामपतयोरयीणाम्॥ २७३ ॥ कूर्मपूजनमन्त्रः—ॐ यस्यकुम्र्मोगृहेहविस्तमग्ग्ने व्वर्द्धयात्वम्। तस्मैदेवाऽअधिब्ब्रवन्नयञ्चब्ब्रह्मण स्प्पतिः॥ २७४॥ ॐ अभ्रिग्रहणमन्त्रः—ॐ देवस्य त्त्वासवितुः प्प्रसवेऽश्श्विनोर्बाहुब्भ्याम्पूष्णोहस्ता ब्भ्याम्। आददेऽदित्यैरास्न्नासि॥ २७५॥ खनन-मन्त्रः—ॐ मावौरिषत्खनितायस्मैचाहङ्खनामिवः। द्विपाच्चतुष्प्पादस्म्माकᳪसर्व्वमस्त्वनातुरम्॥ २७६ ॥





जलसेचनमन्त्रः—ॐ सिञ्चन्तिपरिषिञ्चन्त्युत्सिञ्चन्ति पुनन्तिच। सुरायैबब्भ्रवैमदेकिन्त्वोव्वदतिकिन्त्वः॥ २७७॥ यवनिक्षेपमन्त्रः—ॐ यवोऽसियवयास्म्मद्द्वेषो यवयारातीः॥ २७८॥ स्तम्भोच्छ्रयणमन्त्रः—ॐ उच्छ्रय स्ववनस्प्पतऽऊर्द्ध्वोमापाह्यᳪहसऽआस्ययज्ञस्यो दृचः॥ २७९॥ स्तम्भरोपणमन्त्रः—ॐ ऊर्द्ध्वऽऊषुण ऽऊतयेतिष्ठादेवोनसविता। ऊर्द्ध्वोवाजस्यसनितायद ञ्जिभिर्व्वाघद्भिर्व्विह्वयामहे॥ २८०॥ स्तम्भस्थिरी-

करणमन्त्रः—ॐ स्थिरोभववीड्वङ्गऽआशुर्ब्भव
व्वाज्ज्यर्व्वन्। पृथुर्ब्भवसुखदस्त्वमग्ग्नेः पुरीषवा
हणः ॥२८१॥ शाखासु तैलारोपणमन्त्रः—ॐ व्वसोः
पवित्रमसिशतधारम्व्वसोः पवित्रमसिसहस्रधारम्।
देवस्त्वासवितापुनातुव्वसोः पवित्रेणशतधारेण
सुप्प्वाकामधुक्षः ॥२८२॥ शाखासु सुगन्धिद्रव्येणो-
द्वर्तनमन्त्रः—ॐ अहिरिवभोगैः पर्य्येतिबाहुञ्ज्याया
हेतिम्परिबाधमानः। हस्तग्घ्नोविश्श्वाव्वयुनानिव्वि



द्वान्पुमान्पुमाँसम्परिपातुव्विश्श्वतः ॥२८३॥ उष्णो
दकेन शाखास्नपनमन्त्रः—ॐ निकामेनिकामेनः
पर्ज्जन्न्योवर्षतुफलवत्त्योनऽओषधयः पच्च्यन्ताम्य्यो
गक्षेमोनः कल्प्पताम् ॥२८४॥ शाखासु दध्यक्षत-
प्रक्षेपमन्त्रः—ॐ दधिक्क्राव्ण्णोऽअकारिषञ्जिष्ण्णो
रश्श्वस्यव्वाजिनः। सुरभिनोमुखाकरत्प्रणऽआयूँषि
तारिषत् ॥२८५॥ शाखैकग्रहणमन्त्रः—ॐ याऽओषधीः
पूर्व्वाजातादेवेब्भ्यस्त्रियुगम्पुरा। मनैनुबब्भ्रूणामहं

शतन्धामानिसप्तच॥२८६॥ अग्नुत्तारणमन्त्राः-
ॐ समुद्रस्यत्वावकयाग्नेपरिव्ययामसि। पावको
ऽअस्मभ्यंᳬशिवोभव॥२८७॥ ॐ हिमस्यत्वा
जरायुणाग्नेपरिव्ययामसि। पावकोऽअस्मभ्यंᳬ
शिवोभव॥२८८॥ ॐ उपज्ज्मनुपवेतसेऽवतरन्
दीष्ष्वा। अग्नेपित्तमपामसिमण्डूकिताभिरागहि
सेमन्नोयज्ञम्पावकवर्णᳬशिवंकृधि॥२८९॥ ॐ
अपामिदन्न्ययनᳬसमुद्रस्यनिवेशनम्। अन्न्याँस्ते





ऽअस्मत्तपन्तुहेतयः पावकोअस्मभ्यंᳬशिवो
भव॥२९०॥ ॐ अग्नेपावकरोचिषामन्द्रयादेव
जिह्वया। आदेवान्वक्षियक्षिच॥२९१॥ ॐ सनः
पावकदीदिवोऽग्नेदेवाँ२॥ ऽइहावह। उपयज्ञᳬहवि
श्चनः॥२९२॥ ॐ पावकयायश्चितयन्त्यकृपाक्षा
मन्नुरुचऽउषसोनभानुना। तूर्वन्नयामन्नेतशस्यनूरण
आयोघृणेनततृषाणोऽअजरः॥२९३॥ ॐ नमस्तेहरसे
शोचिषेनमस्तेऽअस्त्वर्च्चिषे। अन्न्याँस्तेऽअस्मत्त

पन्तुहेतयः पावकोऽअस्मभ्यꣳ शिवोभव॥२९४॥

ॐ नृषदेवेडप्सुषदेवेड्बर्हिषदेवेड्वनसदेवेट्स्व र्विदेवेट्॥२९५॥ ॐ येदेवादेवानांयज्ञियायज्ञि यानाꣳ संवत्सरीणमुपभागमासते। अहुतादोहविषो यज्ञेऽअस्मिन्त्स्वयंपिबन्तुमधुनोघृतस्य॥२९६॥ ॐ येदेवादेवेष्वधिदेवत्वमायन्न्येब्ब्रह्मणः पुरऽएता रोऽअस्य। येभ्योनऽऋतेपवतेधामकिंचननते दिवोनपृथिव्याऽअधिस्नुषु॥२९७॥ ॐ प्राणदा





अपानदाव्यानदावर्च्चोदाव्वरिवोदाः। अन्न्याँस्ते अस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳ शिवो भव॥२९८॥ प्राणप्रतिष्ठापनमन्त्राः—ॐ अयम्पुरो भुवस्तस्यप्प्राणोभौवायनोव्वसन्तः प्प्राणायनोगायत्त्री व्वासन्तीगायत्र्यैगायत्रङ्गायत्रादुपाꣳशुरुपाꣳशोस्त्रि वृतोरथन्तरम्व्वसिष्ठऽऋषिः प्प्रजापतिगृहीतयात्त्वया प्प्राणङ्गृह्णामिप्रजाभ्यः॥२९९॥ ॐ अयन्दक्षिणा व्विश्वकर्म्मातस्यमनोव्वैश्वकर्म्मणङ्ग्रीष्मोमानस

स्त्रि॒ष्टुब्ग्रैष्मीत्रि॒ष्टुभ÷स्वा॒रꣳस्वा॒रादन्त॒र्य्यामो॒ऽन्त
र्य्या॒मात्पञ्चद॒शःपञ्चद॒शाद्बृ॒हद्भ॒रद्द्वाज॒ऽऋषि÷
प्र॒जाप॑तिगृहीतया॒त्त्वया॒मनोगृह्णामिप्प्र॒जाब्भ्य÷ ॥३००॥
ॐ अ॒यम्प॒श्श्चाद्वि॒श्श्वव्व्यचा॒स्तस्य॒चक्षुर्वैश्श्वव्व्य॒च
सम्व्व॒र्षाश्श्चाक्षु॒ष्ष्यो॒जगतीव्वा॒र्षीजगत्त्या॒ऽऋक्सम॒म्मृक्स
माच्छु॒क्क्रःशु॒क्क्रात्सप्प्तद॒शःसप्प्तद॒शाद्वैरू॒प
ञ्ज॒मदग्नि॒र्ऋषि÷प्प्र॒जापतिगृहीतया॒त्त्वया॒चक्षुर्ग्गृह्णामि
प्र॒जाब्भ्य÷ ॥३०१॥ ॐ इ॒दमु॒त्तरात्स्व॒स्तस्य॒श्श्रोत्रꣳ

शुक्ल-यजुर्वेदीय-मन्त्र-संहिता ११०



सौ॒वꣳश॒रच्छ्रौत्र्य॒नु॒ष्टुप्शा॒रद्द्य॒नु॒ष्टुभ॒ऽऐडमै॒डान्म॒न्थी
म॒न्थिनऽएकवि॒ꣳ॒शऽएकविꣳशाद्वैरा॒जम्विश्श्वा
मित्रऽऋषि÷प्प्र॒जापतिगृहीतया॒त्त्वया॒श्श्रोत्रङ्गृह्णामि
प्र॒जाब्भ्य÷ ॥३०२॥ ॐ इ॒यमु॒परिम॒तिस्तस्यै॒वाङ्
मा॒त्त्याहैम॒न्तोव्वाच्यःपु॒ङ्क्तिर्हैम॒न्तीपु॒ङ्क्त्यैनि॒धन
वन्नि॒धनवतऽआग्ग्रय॒णऽआग्ग्रय॒णात्त्रिणवत्र्यस्त्रि॒ꣳ
शौत्त्रिणवत्र्यस्त्रि॒ꣳशाब्भ्याꣳशाक्क्वररैव॒तेव्वि॒श्श्व
कर्म्म॒ऽऋषि÷प्प्र॒जापतिगृहीतया॒त्त्वया॒व्वाचङ्गृह्णामि

शुक्ल-यजुर्वेदीय-मन्त्र-संहिता १११

प्रजाबभ्यौल्लोकन्ताऽइन्द्रम् ॥ ३०३ ॥ ॐ मनोजूति
र्ज्जुषतामाज्ज्यस्य्बृहस्प्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टं
य्यज्ञ समिमन्दधातु। विश्वेदेवासऽइहमादयन्ता
मों ३॥ प्रतिष्ठ ॥ ३०४ ॥ कुण्डप्रथमपरिधौ ब्रह्म-
पूजनमन्त्रः—ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः
सुरुचोव्वेनऽआवः। सबुध्न्याऽउपमाऽअस्यव्विष्ठाः सत
श्श्चयोनिमसतश्श्चव्विवः ॥ ३०५ ॥ कुण्डद्वितीयपरिधौ
विष्णुपूजनमन्त्रः—ॐ इदम्विष्णुर्व्विचक्क्रमेत्रेधानि





दधेपदम्। समूढमस्यपा सुरेस्वाहा ॥ ३०६ ॥ कुण्ड-
तृतीयपरिधौ रुद्रपूजनमन्त्रः—ॐ नमस्तेरुद्रमन्न्यव
ऽउतोतऽइषवेनमः। बाहुबभ्यामुततेनमः ॥ ३०७ ॥
कुण्डयोनिपूजनमन्त्रः—ॐ अम्बेऽअम्बिकेम्बालिके
नमानयतिकश्चन। ससस्त्यश्वकः सुभद्रिकाङ्काम्पी
लवासिनीम् ॥ ३०८ ॥ ॐ कुण्डमध्ये नाभिपूजन-
मन्त्रः—ॐ नाभिर्म्मेचित्तम्विज्ञानंपायुर्म्मेऽपचिति
र्ब्भसत्। आनन्दनन्दावाण्डौमेभगः सौभाग्यम्पसः।

जङ्घाबभ्यांपद्भ्याम्धम्मोंऽस्मिव्विशिराजाप्रतिष्ठितः ॥ ३०९ ॥ कुण्डकण्ठपूजनमन्त्रः—ॐ नीलग्ग्रीवाः शितिकण्ठादिवधरुद्द्राऽउपश्रिताः। तेषाछंसहस्र योजनेऽवधन्न्वानितन्न्मसि ॥ ३१० ॥ अग्निमन्थन-मन्त्राः—ॐ समास्त्वाग्नऽऋतवोव्वर्द्धयन्तुसंव्वत्सरा ऽऋषयोयानिसत्या। सन्दिव्व्येनदीदिहिरोचनेन विश्वाऽआभाहिप्प्रदिशश्चतस्त्रः ॥ ३११ ॥ ॐ सञ्चेध्द्धस्वाग्ग्नेप्प्रचबोधयैनमुच्चतिष्ठुमहुतेसौभ



शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता ११४

गाय। माचरिषदुपसत्तातेऽअग्ग्नेब्ब्रह्माणस्तेयशसः सन्तुमान्न्ये ॥ ३१२ ॥ ॐ त्वामग्ग्नेव्वृणतेब्ब्राह्मणा ऽइमेशिवोऽअग्ग्नेसम्व्वरणेभवा नः। सपत्नहानोऽअभि मातिजिच्चस्वेगयैजागृह्यप्प्रयुच्छन् ॥ ३१३ ॥ ॐ इहैवागग्नेऽअधिधारयारयिम्मात्त्वानिक्क्रन्पूर्व्वचितोनि कारिणः। क्षत्रमग्ग्नेसुयममस्तुतुब्भ्यमुपसत्ताव्वर्द्धतान्ते ऽअनिष्टृतः ॥ ३१४ ॥ क्षत्रेणाग्ग्नेस्वायुःसछरभस्व मित्रेणाग्ग्नेमित्रधेयेयतस्व। सजातानाम्मदध्यमस्था



शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता ११५

ऽएधिराज्ञामग्नेव्विहुब्ब्योदीदिहीह ॥ ३१५ ॥ ॐ अति निहोऽअतिस्त्रिधोऽत्याचित्तिमत्यरातिमग्ने। व्विश्श्वाह्यग्ने दुरितासहस्वाथास्म्मब्ध्यंᳫसवीराᳫंरयिन्दाः ॥ ३१६ ॥ ॐ अनाधृष्ष्योजातवेदाऽअनिष्ट्टतोव्विराडग्नेक्षत्रभृद्दीदिहीह। व्विश्श्वाऽआशाः प्रमुञ्चन्न्मानुषीर्ब्भियः शिवेभिरद्यपरिपाहिनोव्वृधे ॥ ३१७ ॥ ॐ बृहस्प्पतेसवितर्ब्बोधयैनᳫंसᳫंशितञ्चित्सन्तराᳫंसᳫंशिशाधि। व्वर्द्धयैनम्महतेसौभगायव्विश्श्वेऽएनमनुमदन्तुदेवाः ॥ ३१८ ॥



ॐ अमुत्रभूयादधयद्यमस्य बृहस्पपतेऽअभिशस्तेरमुञ्चः। प्रत्यौहतामश्श्विनामृत्युमस्म्माद्देवानामग्ग्नेभिषजाशचीभिः ॥ ३१९ ॥ ॐ उदद्वयन्तमसस्प्परिस्वः पश्श्यन्तऽउत्तरम्। देवन्देवत्रासूर्य्यमगन्न्मज्ज्योतिरुत्तमम् ॥ ३२० ॥ ॐ ऊद्ध्वाऽअस्यसमिधोभवन्त्यूद्ध्वाशुक्क्राशोचीᳫंष्यग्ग्नेः। द्युमत्तमासुप्प्रतीकस्यसूनोः ॥ ३२१ ॥ ॐ तनूनपादसुरोव्विश्श्ववेदादेवोदेवेषुदेवः। पथोऽअनक्त्तुमद्ध्वा

घृतेन॥३२२॥ ॐ मद्ध्वायज्ञन्नक्षसेप्प्रीणानोनरा
शꣳसोऽअग्ग्ने। सुकृद्देवꣳसविताविश्श्ववारः॥३२३॥
ॐ अच्छायमैतिशवसाघृतेनैड्डानोवह्निर्न्नमसा।
अग्निꣳस्रुचोऽअद्ध्वरेषुप्प्रयत्सु॥३२४॥ ॐ सय
क्षदस्यमहिमानमग्ग्नेꣳ सऽईम्मन्द्रासुप्प्रयसः। वसु
श्श्चेतिष्ठोवसुधातमश्श्च॥३२५॥ ॐ द्वारोदेवीरन्न्व
स्यविश्श्वेव्व्रतादददन्तेऽअग्ग्नेः। उरुव्व्यचसोधाम्म्ना
पत्यमानाः॥३२६॥ ॐ तेऽअस्यघोषणेदिव्व्येनयोना



ऽउषासानक्त्ता। इमम्यज्ञमवतामद्ध्वरन्नः॥३२७॥
ॐ दैव्याहोताराऽऊद्ध्वमद्ध्वरन्नोऽग्ग्नेर्ज्जिह्वामभि
गृणीतम्। कृणुतन्नःस्विष्टिम्॥३२८॥ ॐ तिस्रो
देवीर्बर्हिरिदꣳसदन्त्विड्डासरस्स्वतीभारती। महीगृ
णाना॥३२९॥ ॐ तन्नस्तुरीपमद्भुतम्पुरुक्षुत्वष्टा
सुवीर्य्यम्। रायस्प्पोषव्विष्यतुनाभिमस्म्मे॥३३०॥
वनस्प्पतेऽवसृजाररराणस्त्मनादेवेषु। अग्निर्हव्यꣳश
मितासूदयाति॥३३१॥ ॐ अग्ग्नेस्स्वाहकृणुहिजातवेद

ऽइन्द्रायहुव्यम्। विश्श्वेदेवाहुविरिदञ्जुषन्ताम्॥ ३ ३ २॥
ॐ पीवोऽअन्नारयिवृधः सुमेधाश्श्वेतस्सिषक्तिक्त नियुतामभिश्श्रीः। तेव्वायवेसमनसोव्वितस्त्थुर्व्विश्श्वे न्नरः स्वपत्यानिचक्क्रुः॥ ३ ३ ३॥ ॐ रायेनुयञ्जज्ञ तूरोदसीमेरायेदेवीधिषणाधातिदेवम्। अधव्वायुन्नि युतः सश्श्चतस्वाऽउतश्श्वेतम्वसुधितिन्निरेके॥ ३ ३ ४॥
ॐ आपोहुयद्बृहतीर्व्विश्श्वमायन्गर्भन्दधानाजनयन्तीरग्नीम्। ततोदेवानाꣳसमवर्त्ततासुरेकः कस्म्मै देवायहविषाव्विधेम॥ ३ ३ ५॥ ॐ यश्चिद्दापोमहिना पर्य्यपश्यद्दक्षन्दधानाजनयन्तीर्य्यज्ञम्। योदेवेष्ष्वधि देवऽएकऽआसीत्कस्म्मैदेवायहविषाव्विधेम॥ ३ ३ ६॥
ॐ प्रयाभिर्य्यासिदाश्श्वाꣳसमच्छानियुद्भिर्व्वाय विष्टयेदुरोणे। निनोरयिꣳसुभोजसम्युवस्वनिवी रञ्ज्व्यमश्श्व्यञ्चराधः॥ ३ ३ ७॥ ॐ आनोनियुद्भिः शतिनीभिरद्ध्वरꣳसहस्त्रिणीभिरुपयाहियज्ञम्। व्वायोऽअस्म्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः

सदानः ॥ ३३८ ॥ ॐ नियुत्वान्वायवागह्ययꣳ शुक्क्रोऽऽअयामिते। गन्तासिसुन्न्वतोगृहम् ॥ ३३९ ॥ ॐ व्वायोशुक्क्रोऽअयामितेमद्ध्वोऽअग्ग्रन्दिविष्ष्टिषु। आयाहिसोमपीतयेस्प्पार्होदेवनियुत्वता ॥ ३४० ॥ ॐ व्वायुरग्ग्रेगायज्ञप्प्रीःसाकङ्गन्मनसायज्ञम्। शिवो नियुद्भिःशिवाभिः ॥ ३४१ ॥ ॐ व्वायोयेतेसहस्त्रिणो रथासस्तेभिरागहि। नियुत्वान्त्सोमपीतये ॥ ३४२ ॥ ॐ एकयाचदशभिश्श्चस्वभूतेद्द्वाब्भ्यामिष्ट्टयेविꣳ





शतीच। तिसृभिश्श्चवहसेत्रिꣳशताचनियुद्भिर्व्वाय विहताविमुञ्च ॥ ३४३ ॥ ॐ तवव्वायवृतस्प्पतेत्वष्टु र्ज्जामातरद्भुत। अवाꣳस्यावृणीमहे ॥ ३४४ ॥ ॐ अभित्त्वाशूरनोनुमोऽदुग्ग्धाऽइवधेनवः। ईशानमस्य जगतःस्वर्दृशमीशानमिन्द्रतस्त्थुषः ॥ ३४५ ॥ नत्त्वा वाँ२ ॥ऽअन्न्योदिव्योनपार्थिवोनजातोनजनिष्ष्यते। अश्श्वायन्तोमघवन्निन्द्रव्वाजिनोगव्यन्तस्त्वाहवा महे ॥ ३४६ ॥ ॐ त्वामिद्धिहवामहेसातौव्वाजस्य

कारवः। त्वां वृत्रेष्विन्द्रसत्पतिन्नरस्त्वाङ्काष्ठास्व
र्वतः॥३४७॥ ॐ सत्वन्नश्चित्रवज्रहस्तधृष्णुया
महस्तवानोऽअद्रिवः। गामश्वᳬरथ्यमिन्द्रसङ्किरसत्रा
वाजन्नजिग्युषे॥३४८॥ ॐ कयानश्चित्रऽआभुव
दूतीसदावृधःसखा। कयाशचिष्ठयावृता॥३४९॥
ॐ कस्त्वासत्योमदानाम्मᳬहिष्ठोमत्सदन्धसः।
दृढाचिदारुजेवसु॥३५०॥ ॐ अभीषुणःसखीनाम
विताजरितृणाम्। शतम्भवास्यूतये॥३५१॥ ॐ





यज्ञायज्ञावोऽअग्नयेगिरागिराचदक्षसे। प्रप्रवय
ममृतञ्जातवेदसम्प्रियम्मित्रन्नशᳬसिषम्॥३५२॥
ॐ पाहिनोऽअग्नऽएकयापाह्युतद्वितीयया। पाहिगी
र्भिस्तिसृभिरूर्ज्जाम्पतेपाहिचतसृभिर्वसो॥३५३॥
ॐ ऊर्ज्जोनपातᳬसहिनाऽयमस्मयुर्दाशेमहव्य
दातये। भुवद्वाजेष्ववितभुवद्वृधऽउतत्रातात
नूनाम्॥३५४॥ ॐ सम्वत्सरोऽसिपरिवत्सरोऽसी
दावत्सरोऽसीद्वत्सरोऽसिवत्सरोऽसि। उषसस्ते

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १२५

कल्प्पन्तामहोरात्रास्तैकल्प्पन्तामर्द्धमासास्तैकल्प्पन्तां
मासास्तेकल्प्पन्तामृतवस्तेकल्प्पन्ताᳬसम्वत्सरस्तै
कल्प्पताम्। प्रेत्याऽएत्यैसञ्चाञ्चप्प्रचसारय। सुपर्ण्ण
चिदसितयादेवतयाङ्गिरस्वद्ध्रुवश्सीद॥ ३५५॥
अग्न्र्घ्र्यानमन्त्रः—ॐ चत्त्वारिशश्रृङ्गात्रयोऽअस्स्यपादाद्वे
शीर्षेसप्तहस्तासोऽअस्य। त्रिधा बद्धोवृषभोरौरवीति
महोदेवोमर्त्त्याँ२ऽआविवेश॥ ३५६॥ नवग्रहस्थापन
मन्त्राः—तत्रादौ सूर्यमन्त्रः—ॐ आकृष्णेनरजसा



वर्त्तमानोनिवेशयन्नमृतम्मर्त्त्यञ्च। हिरण्णययेन
सवितारथेनादेवोयातिभुवनानिपश्यन्॥ ३५७॥
चन्द्रमन्त्रः—ॐ इमन्देवाऽअसपत्नᳬसुवध्वम्महते
क्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्येन्द्रि
याय। इममुष्यपुत्रममुष्यैपुत्रमस्यैव्विशऽएषवोऽमी
राजासोमोऽस्म्माकम्ब्राह्मणानाᳬराजा॥ ३५८॥
भौममन्त्रः—ॐ अग्गिनर्म्मूर्द्धादिवश्ककुत्पतिः पृथि
व्याऽअयम्। अपाᳬरेताᳬसिजिन्न्वति॥ ३५९॥

बुधमन्त्रः—ॐ उद्बुध्यस्वाग्ग्नेप्प्रतिजागृहित्वमिष्टा पूर्त्तेसꣳसृजेथामयञ्च। अस्मिन्त्सधस्थेऽअद्ध्युत्त रस्म्मिन्न्विश्श्वेदेवायजमानश्श्चसीदत॥ ३६०॥

बृहस्पतिमन्त्रः—ॐ बृहस्प्पतेऽअतियदर्ज्र्योऽअर्हाद्द्यु मद्विभातिक्क्रतुमज्जनेषु। यद्दीदयच्छवसऽऋृत प्प्रजाततदस्म्मासुद्द्रविणन्धेहिचित्रम्॥ ३६१॥ शुक्र-मन्त्रः—ॐ अन्नात्परिस्त्रुतोरसम्ब्ब्रह्मणाव्व्यपिब त्क्षत्त्रम्प्पयꣳसोमम्प्रजापतिः। ऋृतेनसत्यमिन्द्रियं





व्विपानꣳशुक्क्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोऽमृतं मधु॥ ३६२॥ शनैश्चरमन्त्रः—ॐ शन्नोदेवीरभिष्टय ऽआपोभवन्तुपीतये। शंय्योरभिस्त्रवन्तुनः॥ ३६३॥

राहुमन्त्रः—ॐ कयानश्चित्रऽआभुवदूतीसदावृधः सखा। कयाशचिष्ठयाव्वृता॥ ३६४॥ केतुमन्त्रः—ॐ केतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे। समु षद्भिरजायथाः॥ ३६५॥ अधिदेवतास्थापनमन्त्राः—तत्रादौ ईश्वरमन्त्रः—ॐ त्र्यम्बकं य्यजामहेसुगन्धिं

पुष्टिवर्द्धनम्। उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीय
मामृतात्॥३६६॥ उमामन्त्रः—ॐ श्रीश्चतेलक्ष्मी
श्चपत्न्यावहोरात्रेपार्श्वेनक्षत्त्राणिरूपमश्विनौ
व्यात्तम्। इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्म
ऽइषाण॥३६७॥ स्कन्दमन्त्रः—ॐ यदक्रन्दः
प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात्। श्येन
स्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअ
र्व्वन्॥३६८॥ विष्णुमन्त्रः—ॐ विष्णोर्रराटमसि





विष्णोःश्नप्त्रेस्त्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोऽसि। वैष्णवमसिविष्णवेत्वा॥३६९॥ ब्रह्म-
मन्त्रः—ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः
सुरुचोवेनऽआवः। सबुध्न्याऽउपमाऽअस्यविष्ठाः
सतश्चयोनिमसतश्चविवः॥३७०॥ इन्द्रमन्त्रः— ॐ
त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम्।
ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधा
त्विन्द्रः॥३७१॥ यममन्त्रः—ॐ यमायत्त्वामखाय

त्त्वासूर्य्यस्यत्त्वातपसे। देवस्त्वासविताम‌द्ध्वानक्तु पृथिव्व्याः सछस्पृशस्प्पाहि। अर्च्चिरसिशोचिरसितपोऽसि॥३७२॥ कालमन्त्रः—ॐ कार्षिरसिसमुद्रस्य त्वाक्षित्त्याऽउन्नयामि। समापोऽअद्भिरग्गमतसमोषधीभिरोषधीः॥३७३॥ चित्रगुप्तमन्त्रः—ॐ चित्रावसो स्वस्तितेपारमशीय॥३७४॥ प्रत्यधिदेवतास्थापन-मन्त्राः—तत्रादौ अग्निमन्त्रः—ॐ अग्निन्दूतम्पुरोदधे हव्यवाहमुपब्रुवे। देवाँ२ऽआसादयादिह॥३७५॥





अपां मन्त्रः—ॐ अप्प्स्वन्तरमृतमप्प्सुभेषजमपामुत प्प्रशस्तिष्ष्वश्श्वाभवतवाजिनः। देवीरापोयोवऽऊर्म्मिः प्प्रतूर्तिःककुन्मान्वाजसास्तेनायंवाजछसेत्॥३७६॥ पृथिवीमन्त्रः—ॐ स्योनाप्पृथिविनोभवानृक्षरा निवेशनी। यच्छानःशर्म्मसप्प्रथाः॥३७७॥ विष्णु-मन्त्रः—ॐ इदंविष्णुर्विचक्क्रमेत्रेधानिदधेपदम्। समूढमस्यपांछसुरे स्वाहा॥३७८॥ इन्द्रमन्त्रः—ॐ त्रातारमिन्द्रमवितारमिन्द्रछहवेहवेसुहवछशूर

मिन्द्रम्। ह्वयामिशक्क्रम्पुरुहूतमिन्द्रꣳस्वस्तिनो
मघवाधात्विन्द्रः॥३७९॥ इन्द्राणीमन्त्रः—ॐ अदि
त्यैरास्नासीन्द्राण्याऽउष्णणीषः। पूषासिघर्म्माय
दीष्व॥३८०॥ प्रजापतिमन्त्रः—ॐ प्रजापतेनत्वदेता
न्न्यन्न्योव्विश्श्वारूपाणिपरिताबभूव। यत्कामास्तेजुहु
मस्तन्नोऽअस्तुव्वयꣳस्यामपतयोरयीणाम्॥३८१॥
सर्पमन्त्रः—ॐ नमोऽस्तुसर्प्पेब्भ्योयेकेचपृथिवीमनु।
येऽअन्तरिक्षेयेदिवितेब्भ्यः सर्प्पेब्भ्योनमः॥३८२॥



पञ्चलोकपालस्थापनमन्त्राः—तत्रादौ गणेशमन्त्रः—ॐ
गणानान्त्वागणपतिꣳहवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳ
हवामहेनिधीनान्त्वानिधिपतिꣳहवामहेव्वसोमम।
आहमजानिगर्भधमात्त्वमजासिगर्भधम्॥३८३॥
दुर्गामन्त्रः—ॐ अम्बेऽअम्बिकेऽम्बालिकेनमानयति
कश्चन। ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासि
नीम्॥३८४॥ वायुमन्त्रः—ॐ व्वातोवामनोवागन्धर्वाः
सप्प्तविꣳशतिः। तेऽअग्ग्रेश्श्वमयुञ्जँस्तेऽअस्मिम

ञ्जवमादधुः ॥ ३८५ ॥ आकाशमन्त्रः—ॐ घृतङ्घृत
पावानः पिबतुव्वसांव्वसापावानः पिबतान्तरिक्षस्यहुवि
रसिस्वाहा। दिशः प्प्रदिशऽआदिशोव्विदिशऽउद्दिशो
दिग्भ्यः स्वाहा ॥ ३८६ ॥ अश्विनीकुमारमन्त्रः—ॐ
याव्वाङ्कशामधुमत्यश्विनासूनृतावती। तयायज्ञम्मि
मिक्षतम् ॥ ३८७ ॥ वास्तोष्पतिस्थापनमन्त्रः—ॐ
वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोऽअनमीवोभ
वानः। यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतु



ष्पदे ॥ ३८८ ॥ क्षेत्राधिपतिस्थापनमन्त्रः—ॐ नहिस्प्प
शमविदन्नन्न्यमस्माद्वैश्वानरात्पुरऽएतारमग्ग्नेः। एमैनम
वृधन्नमृताऽअमर्त्त्यंव्वैश्वानरङ्क्षैत्रजित्यायदेवाः ॥ ३८९ ॥
दशदिक्पालस्थापनमन्त्राः—तत्रादौ इन्द्रमन्त्रः—
ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳ शूर
मिन्द्रम्। ह्वयामिशक्क्रम्पुरुहूतमिन्द्रꣳस्वस्तिनो
मघवाधात्विन्द्रः ॥ ३९० ॥ अग्निमन्त्रः—ॐ त्वन्नो
ऽअग्ग्नेतववदेवपायुभिर्म्मघोनोरक्षतन्न्वश्चवन्द्य।

ऋातातोकस्यतनयेगवामुस्यनिमेषङ्खरक्षमाणस्त वव्व्रते॥३९१॥ यममन्त्रः—ॐ असिषमोऽअस्या दित्त्योऽअर्व्वन्नसिन्त्रितोगुह्यैनव्व्रतेन। असिसोमैनस मयाव्विपृक्तक्तऽआहुस्तेत्रीणिदिविबन्धनानि॥३९२॥ निर्ऋतिमन्त्रः—ॐ असुन्न्वन्तमयजमानमिच्छस्तेन स्येत्त्यामन्न्विहितस्क्करस्य। अन्न्यमुस्म्मदिच्छसात ऽइत्त्यानमोदेविनिर्ऋतेतुब्भ्यमस्तु॥३९३॥ वरुण-मन्त्रः—ॐ इमम्मेवरुणश्श्रुधीहवमद्याचमृडय। त्त्वाम

शुक्ल-यजुर्वेदीय-मन्त्र-संहिता १३८



वस्युराचके॥३९४॥ वायुमन्त्रः—ॐ आनोनियुद्भिः शतिनीभिरद्ध्वरङ्घसहस्त्रिणीभिरुपयाहियज्ञम्। व्वायोऽअस्म्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः॥३९५॥ सोममन्त्रः—ॐ व्वयङ्घसोमव्व्रतेत वमनस्तनूषुबिब्भ्रतः। प्प्रजावन्तःसचेमहि॥३९६॥ ईशानमन्त्रः—ॐ तमीशानञ्जगतस्तस्त्थुषस्प्पति न्धियञ्जिन्न्वमवसेहूमहेव्वयम्। पूषानोयथाव्वेद सामसद्वृधेरक्षितापायुरदब्धःस्वस्तये॥३९७॥

शुक्ल-यजुर्वेदीय-मन्त्र-संहिता १३९

ब्रह्ममन्त्रः—ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः। सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः॥३९८॥ अनन्तमन्त्रः—ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी। यच्छानः शर्म्मसप्रथाः॥३९९॥ प्रतिष्ठामन्त्रः—ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्प्पतिर्य्यज्ञमिमन्तनोत्वरिष्टं य्यज्ञꣳसमिमन्दधातु। विश्वेदेवासऽइहमादयन्तामोꣳ प्रतिष्ठ॥४००॥ असङ्ख्यातरुद्रकलशस्थापनमन्त्रः—



ॐ असंख्यातासहस्राणियेरुद्राअधिभूम्याम्। तेषाꣳ सहस्रयोजनेऽवधन्वानितन्मसि॥४०१॥ वराहुतिमन्त्राः—गणेश हवनमन्त्रः—ॐ गणानान्त्वागणपतिꣳ हवामहे प्प्रियाणान्त्वाप्प्रियपतिꣳ हवामहेनिधीनान्त्वानिधिपतिꣳ हवामहेव्वसोमम। आहमजानिगर्ब्भधमात्त्वमजासिगर्ब्भधम् स्वाहा॥४०२॥ अम्बाहवनमन्त्रः—ॐ अम्बेऽअम्बिकेऽम्बालिकेनमानयतिकश्चन। ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् स्वाहा॥४०३॥

नवग्रहहवनमन्त्राः-तत्रादौ सूर्यहवनमन्त्रः-ॐ आकृष्णेन रजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च। हिरण्ययेन सविता रथेनादेवोयातिभुवनानिपश्यन् स्वाहा॥४०४॥ चन्द्रहवनमन्त्रः-ॐ इमन्देवाऽअसपत्नꣳसुवध्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्येन्द्रियाय। इमममुष्यपुत्रममुष्यैपुत्रमस्यैव्विशऽएषवोऽमीराजासोमोऽस्म्माकम्ब्ब्राह्मणानाꣳराजा स्वाहा॥४०५॥ भौमहवनमन्त्रः-ॐ अग्निर्म्मूर्द्धा





दिवꣳककुत्पतिꣳपृथिव्याऽअयम्। अपाꣳरेताꣳसिजिन्न्वति स्वाहा॥४०६॥ बुधहवनमन्त्रः-ॐ उद्बुध्यस्वाग्ग्नेप्प्रतिजागृहित्वमिष्टापूर्त्तेसꣳसृजेथामयञ्च। अस्म्मिन्त्सधस्थेऽअद्ध्युत्तरस्म्मिन्विश्श्वेदेवायजमानश्च्चसीदत स्वाहा॥४०७॥ बृहस्पतिहवन-मन्त्रः-ॐ बृहस्प्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्क्रतुमज्जनेषु। यद्दीदयच्छवसऽऋतप्प्रजाततदस्म्मासुद्द्रविणन्धेहिचित्रम् स्वाहा॥४०८॥ शुक्र-

हवनमन्त्रः—ॐ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपि
बत्क्षत्रम्पयः सोमम्प्रजापतिः। ऋतेनसत्यमिन्द्रियं
विपानंशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु
स्वाहा॥४०९॥ शनैश्चरहवनमन्त्रः—ॐ शन्नोदेवीर
भिष्टयऽआपोभवन्तुपीतये। शंय्योरभिस्रवन्तुनः
स्वाहा॥४१०॥ राहुहवनमन्त्रः—ॐ कयानश्चित्र
ऽआभुवदूतीसदावृधः सखा। कयाशचिष्ठयावृता
स्वाहा॥४११॥ केतुहवनमन्त्रः—ॐ केतुङ्कृण्वन्न



केतवेपेशोमर्य्याऽअपेशसे। समुषद्भिरजायथाः
स्वाहा॥४१२॥ अधिदेवताहवनमन्त्राः—तत्रादौ ईश्वर-
हवनमन्त्रः— ॐ त्र्यम्बकंय्यजामहेसुगन्धिम्पुष्टिवर्द्ध
नम्। उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात्
स्वाहा॥४१३॥ उमाहवनमन्त्रः—ॐ श्रीश्चतेलक्ष्मी
श्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्या
त्तम्। इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण
स्वाहा॥४१४। स्कन्दहवनमन्त्रः—ॐ यदक्रन्दः

प्प्रथमञ्जायमानऽउद्यन्त्समुद्द्रादुतवापुरीषात्। श्येनस्य
पक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्व्वन्
स्वाहा॥४१५॥ विष्णुहवनमन्त्रः—ॐ व्विष्णोरराट
मसिव्विष्णोःश्नप्त्रेस्त्थोव्विष्णोःस्यूरसिव्विष्णोर्
द्ध्रुवोऽसि। व्वैष्णवमसिव्विष्णवेत्वा स्वाहा॥४१६॥
ब्रह्महवनमन्त्रः—ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसी
मतः सुरुचोव्वेनऽआवः। सबुध्न्याऽउपमाऽअस्यव्विष्ठाः
सतश्चयोनिमसतश्चव्विवः॥४१७॥ इन्द्रहवनमन्त्रः—ॐ



त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम्।
ह्वयामिशक्क्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवा
धात्विन्द्रः स्वाहा॥४१८॥ यमहवनमन्त्रः—ॐ यमा
यत्त्वामखायत्त्वासूर्य्यस्यत्त्वातपसे। देवस्त्वासविता
मद्ध्वानक्तुपृथिव्व्याःसꣳस्पृशस्प्पाहि। अर्च्चिरसि
शोचिरसितपोऽसि स्वाहा॥४१९॥ कालहवनमन्त्रः—
ॐ कार्षिरसिमुद्द्रस्यत्त्वाक्षित्त्याऽउन्नयामि। समापो
ऽअद्भिरग्मत समोषधीभिरोषधीः स्वाहा॥४२०॥

चित्रगुप्तहवनमन्त्रः—ॐ चित्रावसोस्वस्तितेपारमशीय स्वाहा॥४२१॥ प्रत्यधिदेवताहवनमन्त्राः—तत्रादौ अग्नि-हवनमन्त्रः—ॐ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्ब्रुवे। देवाँ२ऽआसायादिह स्वाहा॥४२२॥ अपां हवनमन्त्रः—ॐ अप्स्वन्तरमृतमप्सुभेषजमपामुतप्रशस्तिष्वश्वा भवतवाजिनः। देवीरापोयोवऽऊर्म्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायम्वाजꣳसेत् स्वाहा॥४२३॥ पृथिवीहवनमन्त्रः—ॐ स्योनापृथिविनोभवानृक्षरा



निवेशनी। यच्छानःशर्म्मसप्रथाः स्वाहा॥४२४॥ विष्णुहवनमन्त्रः—ॐ इदंविष्णुर्विचक्रमेत्रेधा निदधेपदम्। समूढमस्यपाꣳसुरेस्वाहा॥४२५॥ इन्द्रहवनमन्त्रः—ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳशूरमिन्द्रम्। ह्वयामिशक्रम्पुरुहूत मिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः स्वाहा॥४२६॥ इन्द्राणीहवनमन्त्रः—ॐ अदित्यैरास्नासीन्द्राण्या ऽउष्णीषः। पूषासिघर्म्मायदीष्व स्वाहा॥४२७॥

प्रजापतिहवनमन्त्रः—ॐ प्रजापतेनत्वदेताान्न्यन्न्यो
व्विश्श्वारूपाणिपरिताबभूव। यत्कामास्तेजुहुमस्तन्नो
ऽअस्तुव्वयꣳ स्यामपतयोरयीणाम् स्वाहा॥४२८॥
सर्पहवनमन्त्रः—ॐ नमोऽस्तुसर्प्पेब्भ्योयेकेचपृथिवी
मनु। येऽअन्तरिक्षेयेदिवितेब्भ्यः सर्प्पेब्भ्योनमः
स्वाहा॥४२९॥ पञ्चलोकपालहवनमन्त्राः—तत्रादौ
गणेशहवनमन्त्रः—ॐ गणानान्त्वागणपतिꣳहवामहे
प्प्रियाणान्त्वाप्प्रियपतिꣳहवामहेनिधीनान्त्वानि

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १५०



धिपतिꣳहवामहेव्वसोमम। आहमजानिगर्ब्भधमा
त्त्वमजासिगर्ब्भधम् स्वाहा॥४३०॥ दुर्गाहवन-
मन्त्रः—ॐ अम्बेऽअम्बिकेऽम्बालिकेनमानयति
कश्चन। ससस्त्यश्वकः सुभद्द्रिकाङ्काम्पीलवासिनीम्
स्वाहा॥४३१॥ वायुहवनमन्त्रः—ॐ व्वातोवामनो
वागन्धर्व्वाः सप्तविꣳशतिः। तेऽअग्ग्रेश्श्वमयुञ्जँस्तेऽ
अस्म्मिञ्जवमादधुः स्वाहा॥४३२॥ आकाश-
हवनमन्त्रः—ॐ घृतङ्घृतपावानः पिबतव्वसांव्वसापा

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १५१

वानः पिबतान्तरिक्षस्य हविरसि स्वाहा। दिशः प्रदिश
ऽआदिशो विदिश ऽउद्दिशो दिग्भ्यः स्वाहा॥४३३॥
अश्विनीकुमारहवनमन्त्रः—ॐ यावाङ्कशामधुमत्यश्विना
नासूनृतावती। तया यज्ञम्मिमिक्षतम् स्वाहा॥४३४॥
वास्तोष्पतिहवनमन्त्रः—ॐ वास्तोष्पते प्रति जानीह्य
स्मान्स्वावेशो ऽअनमीवो भवा नः। यत्त्वेमहे प्रति तन्नो
जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा॥४३५॥
क्षेत्राधिपतिहवनमन्त्रः—ॐ नहि स्पशमविदन्नन्य



मस्माद्वैश्वानरात्पुर ऽएतारमग्नेः। एमेनमवृधन्नमृता
ऽअमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः स्वाहा॥४३६॥
दशदिक्पालहवनमन्त्राः—तत्रादौ इन्द्रहवनमन्त्रः—ॐ
त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम्।
ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धा
त्विन्द्रः स्वाहा॥४३७॥ अग्निहवनमन्त्रः—ॐ त्वन्नो
ऽअग्ने तव देव पायुभिर्म्मघोनो रक्ष तन्वश्च वन्द्य। त्राता
तोकस्य तनये गवामस्य निमेषꣳ रक्षमाणस्तव व्व्रते

स्वाहा॥४३८॥ यमहवनमन्त्रः—ॐ असिय्यमो ऽअस्यादित्त्योऽअर्व्वन्नसित्रितोगुह्येनव्व्रतेन। असिसो मैनसमयाव्विपृक्तःऽआहुस्तेत्रीणिदिविबन्धनानि स्वाहा॥४३९॥ निर्ऋतिहवनमन्त्रः—ॐ असुन्न्वन्त मयजमानमिच्छस्तेनस्येत्त्यामन्न्विहितस्क्करस्य। अन्न्यमस्म्मदिच्छसातऽइत्त्यानमोदेविनिर्ऋतेतुब्भ्य मस्तु स्वाहा॥४४०॥ वरुणहवनमन्त्रः—ॐ इमम्मे व्वरुणश्श्रुधीहवमद्याचमृडय। त्वामवस्युराचके



स्वाहा॥४४१॥ वायुहवनमन्त्रः—ॐ आनोनियुद्भिः शतिनीभिरद्ध्वरꣳसहस्त्रिणीभिरुपयाहियज्ञम्। व्वायो ऽअस्म्मिन्त्सवनेमादय स्वयूयम्पातस्वस्तिभिः सदानः स्वाहा॥४४२॥ सोमहवनमन्त्रः—ॐ व्वयꣳसोमव्व्रतेतव मनस्तनूषुबिब्भ्रतः। प्प्रजावन्तः सचेमहि स्वाहा॥४४३॥ ईशानहवनमन्त्रः—ॐ तमीशानञ्ज्जगतस्तस्त्थुषस्प्प तिन्धियञ्जिन्न्वमवसेहूमहेव्वयम्। पूषानोयथाव्वेदसाम सद्वृधेरक्षितापायुरदब्धः स्वस्तये स्वाहा॥४४४॥

ब्रह्महवनमन्त्रः—ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्वि
सीमतः सुरुचोव्वेनऽआवः। सबुध्न्याऽउपमाऽअस्य
व्विष्ठाः सतश्चयोनिमसतश्चव्विवः स्वाहा॥४४५॥
अनन्तहवनमन्त्रः—ॐ स्योनापृथिविनोभवानृक्षरा
निवेशनी। यच्छानः शर्म्मसप्रथाः स्वाहा॥४४६॥
प्रधानदेवताहवनमन्त्राः[1]—तत्रादौ गणपतिहवनमन्त्रः—
हरिः ॐ गणानान्त्वागणपतिꣳहवामहेप्प्रियाणा
न्त्वाप्प्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवा

१. 'यस्य देवस्य यो होमस्तस्य मन्त्रेण होमयेत्।' (यज्ञमीमांसा पृष्ठ सं० ३००)



महेव्वसोमम। आहमजानिगर्ब्भधमात्त्वमजासिगर्ब्भ
धम् स्वाहा[2]॥४४७॥ दुर्गाहवनमन्त्रः—ॐ अम्बे
ऽअम्बिकेऽम्बालिकेनमानयतिकश्चन। ससस्त्य
श्वकः सुभद्रिकाङ्काम्पीलवासिनीम् स्वाहा॥४४८॥
विष्णोर्हवनमन्त्रः—ॐ तदिव्विष्णोः परमम्पदꣳ सदा
पश्यन्तिसूरयः। दिवीवचक्षुराततम् स्वाहा॥४४९॥
सूर्यस्य हवनमन्त्रः—ॐ आकृष्णेनरजसाव्वर्त्त
मानोनिवेशयन्नमृतंमर्त्त्यञ्च। हिरण्ययेनसवितारथेना

२. सर्वे मन्त्राः प्रयोक्तव्याः स्वाहान्ता होमकर्मसु। (प्रयोगसार)

देवोयातिभुवनानिपश्यन् स्वाहा॥४५०॥ शिवस्य हवनमन्त्रः—ॐ नमस्तेरुद्रमन्न्यवऽउतोतऽइषवेनमः। बाहुबभ्यामुततेनमः स्वाहा॥४५१॥ कृष्णस्य हवन-मन्त्रः—ॐ कृष्णोस्याखरेष्ठोग्ग्नयेत्त्वाजुष्टम्प्रोक्षामि वेदिरसिबर्हिषेत्त्वाजुष्टम्प्रोक्षामिबर्हिरसिस्त्रुग्ग्भ्यस्त्वाजुष्टम्प्रोक्षाम्म्यदित्त्यैव्युन्दनम् स्वाहा॥४५२॥ राधाया हवनमन्त्रः—ॐ श्वात्रास्त्थवृत्रतुरोराधोगूर्ताऽअमृतस्यपत्नीः। तादेवीर्देवत्रेमम्यज्ञन्नयतोपहूताः





सोमस्यपिबत स्वाहा॥४५३॥ श्रीरामस्य हवन-मन्त्रः—ॐ प्रतद्विष्णुस्तवतेवीर्य्येणमृगोनभीमः कुचरोगिरिष्ठाः। यस्योरुषुत्रिषुविक्क्रमणेष्ष्वधिक्षियन्तिभुवनानिविश्श्वा स्वाहा॥४५४॥ हनुमद्धवन-मन्त्रः—ॐ आतित्थ्यरूपम्मासरम्महावीरस्यनग्ग्रहुः। रूपमुपसदामेतत्तिस्त्रोरात्रीः सुरासुता स्वाहा॥४५५॥ नारायणस्य हवनमन्त्रः—ॐ विष्ष्णोरराटमसिविष्ष्णोः श्नप्त्रेस्त्थोविष्ष्णोः स्यूरसिविष्ष्णोर्ध्रुवोसि। वैष्ष्णव

र्मसिविष्णवेत्त्वा स्वाहा॥४५६॥ लक्ष्म्या हवन-मन्त्रः—ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वे नक्षत्राणिरूपमश्विनौव्यात्तम्। इष्णन्निषाणामुम्म इषाणसर्वलोकम्मइषाण स्वाहा॥४५७॥ नृसिंहस्य हवनमन्त्रः—ॐ प्रतद्विष्णुस्तवतेवीर्य्येणमृगोन भीमःकुचरोगिरिष्ठाः। यस्योरुषुत्रिषुविक्रमणे ष्ष्वधिक्षियन्तिभुवनानिविश्श्वा स्वाहा॥४५८॥ काल्या हवनमन्त्रः—ॐ कन्न्याऽइववहतुमेतवाऽ





उऽअञ्ज्यञ्जानाऽअभिचाकशीमि। यत्रसोमः सूयते यत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते स्वाहा॥४५९॥ गायत्र्या हवनमन्त्रः—ॐ गायत्रीत्रिष्टुब्ब्जगत्यनुष्टु प्पङ्क्त्यामह। बृहत्युष्ष्णिहाककुप्प्सूचीभिःशम्म्य न्तुत्वा स्वाहा॥४६०॥ सरस्वत्या हवनमन्त्रः—ॐ पावकानःसरस्वतीवाजेभिर्वाजिनीवती। यज्ञम्वष्टु धियावसुः स्वाहा॥४६१॥ गंगाया हवनमन्त्रः—ॐ ऐन्द्रःप्प्राणोअङ्गेअङ्गेनिदीद्ध्यदैन्द्रऽउदानोऽअङ्गे

ऽअङ्गेनिधीतः। देवत्त्वष्टुर्बभूरितेसꣳसमेतुसलक्ष्माय
द्विषुरूपम्भवाति। देवत्राषन्तमवसेसखायोनुत्वामाता
पितरौमदन्तु स्वाहा॥४६२॥ श्यामदेवस्य हवन-
मन्त्रः—ॐ अश्यामतङ्कामममग्नेतवोतीऽअश्याम
रयिꣳरयिवःसुवीरम्। अश्यामवाजमभिवाजयन्तो
श्यामद्युम्नमजराजरन्ते स्वाहा॥४६३॥ भैरवस्य
हवनमन्त्रः—ॐ येभूतानामधिपतयोविशिखासः
कपर्द्दिनः। तेषाꣳसहस्त्रयोजनेवधन्वानितन्मसि

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १६२



स्वाहा॥४६४॥ वरुणहवनमन्त्रः—ॐ तत्त्वायामि
ब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः।
अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः
स्वाहा॥४६५॥ [1]विष्णुयागहवनमन्त्राः—हरिः ॐ
सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात्। सभूमिꣳ
सर्वतःस्पृत्वात्यतिष्ठद्दशाङ्गुलम् स्वाहा॥४६६॥
पुरुषएवेदꣳसर्वंयद्भूतम्यच्चभाव्यम्। उतामृतत्व
स्येशानोयदन्नेनातिरोहति स्वाहा॥४६७॥ एता

१. विष्णुयागसमं नान्यत् साधनं ब्रह्मगोलके। विद्यते सर्वथा ब्रह्मन् तस्मात्कार्यो मखोत्तमः॥ (वि०सि०)

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १६३

वानस्यमहिमातोज्यायाँश्चपूरुषः। पादोऽस्यविश्वा
भूतानित्रिपादस्यामृतंदिवि स्वाहा॥४६८॥ त्रिपा
दूर्ध्वउदैत्पुरुषः पादोऽस्येहाभवत्पुनः। ततोविष्वङ्
व्यक्रामत्साशनानशनेअभि स्वाहा॥४६९॥ ततो
विराडजायतविराजोअधिपूरुषः। सजातोअत्यरि
च्यतपश्चाद्भूमिमथोपुरः स्वाहा॥४७०॥ तस्माद्यज्ञा
त्सर्वहुतः सम्भृतम्पृषदाज्यम्। पशूँस्ताँश्चक्रेवायव्या
नारण्याग्राम्याश्चये स्वाहा॥४७१॥ तस्माद्यज्ञात्सर्व



हुतऋचः सामानिजज्ञिरे। छन्दाᳬंसिजज्ञिरेतस्माद्य
जुस्तस्मादजायत स्वाहा॥४७२॥ तस्मादश्वाअजा
यन्तयेकेचोभयादतः। गावोहजज्ञिरेतस्मात्तस्मा
ज्जाताऽअजावयः स्वाहा॥४७३॥ तम्यज्ञम्बर्हिषि
प्रौक्षन्पुरुषञ्जातमग्रतः। तेनदेवाऽअयजन्तसाध्या
ऽऋषयश्चये स्वाहा॥४७४॥ यत्पुरुषंव्यदधुः
कतिधाव्यकल्पयन्। मुखङ्किमस्यासीत्किम्बाहूकिमूरू
पादाउच्यतेते स्वाहा॥४७५॥ ब्राह्मणोऽस्यमुख

मासीद्बाहूराजन्यः कृतः। ऊरूतदस्ययद्वैश्यः पद्भ्याᳪशूद्रोऽअजायत स्वाहा॥४७६॥ चन्द्रमा मनसोजातश्चक्षोः सूर्योऽअजायत। श्रोत्राद्वायुश्च प्राणश्चमुखादग्निरजायत स्वाहा॥४७७॥ नाभ्या ऽआसीदन्तरिक्षᳪशीर्ष्णोद्यौः समवर्तत। पद्भ्याम्भूमि र्दिशः श्रोत्रात्तथालोकाँ२ऽअकल्पयन् स्वाहा॥४७८॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत। वसन्तोऽस्या सीदाज्यंग्रीष्मइध्मः शरद्धविः स्वाहा ॥४७९॥



सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः। देवा यद्यज्ञन्तन्वानाअबध्नन्पुरुषम्पशुम् स्वाहा॥४८०॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणिप्रथमान्यासन्। तेहनाकम्महिमानः सचन्तयत्रपूर्वेसाध्याः सन्तिदेवाः स्वाहा॥४८१॥ [1]रुद्रयागहवनमन्त्राः—हरिः ॐ नमस्तेरुद्रमन्यवउतोतइषवेनमः। बाहुभ्यामुततेनमः स्वाहा॥४८२॥ यातेरुद्रशिवातनूरघोराऽपापका शिनी। तयानस्तन्ववाशन्तमयागिरिशन्ताभिचाक

१. भोक्ता स सर्वयज्ञानां शङ्करः परमार्थतः। (सौरपुराण ७।१४)

शीहि स्वाहा॥४८३॥ यामिषुंगिरिशन्तहस्तैबिभर्ष्य
स्तंवे। शिवाङ्गिंरित्रतां कुरुमाहिंᳬसीᳬ पुरुषञ्जगत्
स्वाहा॥४८४॥ शिवेनवचसात्त्वागिरिशाऽच्छांवदा
मसि। यथानᳬसर्वमिज्जगदयक्ष्मᳬसुमनाऽअसत्
स्वाहा॥४८५॥ अद्ध्यवोचदधिवक्ताप्प्रथमोदैव्यो
भिषक्। अहींश्चसर्वाञ्जम्भयन्त्सर्वांश्चयातुधान्यो
ऽधराचीᳬपरासुव स्वाहा॥४८६॥ असौयस्ताम्म्रो
ऽअरुणऽउतबब्भ्रुःसुमङ्गलः। येचैनᳬरुद्राऽअभितो



दिक्षुश्रिताःसहस्रशोऽवैषाᳬहेडईमहे स्वाहा॥४८७॥
असौयोऽवसर्प्पतिनीलग्ग्रीवोविलोहितः। उतैनङ्गोपाऽअ
दृश्रन्नदृश्रन्नुदहार्य्यᳬसदृष्टोमृडयातिनᳬ स्वाहा॥४८८॥
नमोऽस्तुनीलग्रीवायसहस्राक्षायमीढुषे। अथोयेऽअस्य
सत्वानोहन्तेभ्योऽकरन्नमः स्वाहा॥४८९॥ प्रमुञ्च
धन्न्वनस्त्वमुभयोरात्क्न्योर्ज्याम्। याश्चतेहस्तऽइषवᳬ
पराताभगवोवप स्वाहा॥४९०॥ विज्ज्यन्धनुःकप
र्दिनोविशल्योबाणवाँ२उत। अनैशन्नस्ययाऽइषव

ऽआभुरस्यनिषङ्गधिः स्वाहा॥४९१॥ यातेंहेतिम्मीं
ढुष्टमबभूवतेधनुः। तयास्मान्विश्श्वतस्त्वमयक्ष्मया
परिभुज स्वाहा॥४९२॥ परितेधन्न्वनोहेतिरस्मान्न्वृणक्तु
विश्श्वतः। अथोयऽइषुधिस्तवारेऽअस्म्मन्निधेहितम्
स्वाहा ॥४९३॥ अवतत्यधनुष्ट्वꣳ सहस्राक्षशते
षुधे। निशीर्ष्यशल्ल्यानाम्मुखाशिवोनः सुमना
भव स्वाहा॥४९४॥ नमस्तऽआयुधायानातताय
धृष्णवे। उभाब्भ्यामुततेनमोबाहुब्भ्यान्तव धन्न्वने

शुक्ल-यजुर्वेदीय-मन्त्र-संहिता १७०



स्वाहा॥४९५॥ मानोमहान्तमुतमानोऽअब्र्भकम्मान्
ऽउक्षन्तमुतमानऽउक्षितम्। मानोवधीः पितरम्मोत
मातरम्मानःप्प्रियास्तन्न्वोरुद्ररीरिषः स्वाहा॥४९६॥
मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वे
षुरीरिषः। मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तः सद
मित्त्वाहवामहे स्वाहा॥४९७॥ [1]सूर्ययागहवन
मन्त्राः—ॐ विभ्राड्बृहत्पिबतुसोम्यम्मद्ध्वायुर्दध

१. सूर्ययागं प्रकर्तव्यं सर्वपापापनुत्तये। नृणां रोगहरं सर्वं सर्वेषामीप्सितप्रदम्। (महानिबन्धे)

शुक्ल-यजुर्वेदीय-मन्त्र-संहिता १७१

द्युम्नपतावविह्वुतम्। वातजूतोऽग्नोअभिरक्षतित्मना
प्रजाः पुपोषपुरुधाविराजति स्वाहा॥४९८॥ उदुत्यं
जातवेदसन्देवंवहन्तिकेतवः। दृशेविश्वायसूर्य्यम्
स्वाहा॥४९९॥ येनापावकचक्षसाभुरण्यन्तञ्जनाँ२
अनु। त्वंवरुणपश्यसि स्वाहा॥५००॥ दैव्यावध्वर्यू
आगतङ्गरथेनसूर्य्यत्वचा। मद्ध्वायज्ञङ्गसमञ्जाथे।
तम्प्रत्नथायम्वेनश्चित्रन्देवानाम् स्वाहा॥५०१॥ तं
प्रत्नथापूर्वथाविश्वथेमथा ज्येष्ठतातिम्बर्हिषदङ्गस्वर्वि



दम्। प्रतीचीनम्वृजनंदोहसे धुनिमाशुञ्जयन्तमनुया
सुवर्धसे स्वाहा॥५०२॥ अयंवेनश्चोदयत्पृश्नि
गर्भाज्योतिर्जरायूरजसोवि माने। इममपाᳬसङ्गमे
सूर्य्यस्यशिशुन्नविप्रामतिभीरिहन्ति स्वाहा॥५०३॥
चित्रं देवानामुदगादनीकञ्चक्षुर्मित्रस्यवरुणस्याग्नेः।
आप्राद्यावापृथिवीअन्तरिक्षङ्गसूर्य्यआत्माजगतस्तस्थु
षश्च स्वाहा॥५०४॥ आनइडाभिर्विदथेसुशस्तिविश्वा
नरः सविताදेवएतु। अपियथायुवानोमत्सथानोविश्वं

जगदभिपित्वेमनीषा स्वाहा॥५०५॥ यदुद्यकच्चवृत्र
हन्नुदगाअभिसूर्य्य। सर्वन्तदिन्द्रतेवशे स्वाहा॥५०६॥
तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य्य। विश्वमाभासि
रोचनम् स्वाहा॥५०७॥ तत्सूर्य्यस्यदेवत्वन्तन्महित्वं
मद्ध्याकर्तोर्विततꣳसंजभार। यदेदयुक्तहरितः
सधस्थादाद्रात्रीवासस्तनुतेसिमस्मै स्वाहा॥५०८॥
तन्मित्रस्यवरुणस्याभिचक्षेसूर्य्योरूपङ्कृणुतेद्योरु
पस्थे। अनन्तमन्न्यद्रुशदस्यपाजःकृष्णमन्न्यद्धरितः



संभरन्ति स्वाहा॥५०९॥ बण्महाँ२ऽअसिसूर्य्य
बडादित्यमहाँ२ऽअसि। महस्तेसतोमहिमापनस्यते
ऽद्धादेवमहाँ२ऽअसि स्वाहा॥५१०॥ बट्सूर्य्य
श्रवसामहाँ२ऽअसिसत्रादेवमहाँ२ऽअसि। मन्हादेवा
नामसुर्य्यः पुरोहितोविभुज्योतिरदाभ्यम् स्वाहा॥५११॥
श्रायन्तइवसूर्य्यम्विश्वेदिन्द्रस्यभक्षत। वसूनिजातेजन
मानऽओजसाप्रतिभागन्नदीधिम स्वाहा॥५१२॥ अद्या
देवाऽउदितासूर्य्यस्यनिरꣳहसःपिपृतानिरवद्यात्।

तन्नोमित्रोवरुणोमामहन्तामदितिः सिन्धुः पृथिवीउत द्यौः स्वाहा॥५१३॥ आकृष्णेनरजसावर्तमानोनिवेश यन्नमृतंमर्त्यं च। हिरण्ययेनसवितारथेनादेवोयातिभुव नानिपश्यन् स्वाहा॥५१४॥ [1]गणेशयागहवनमन्त्राः—
ॐ आतूनऽइन्द्रवृत्रहन्नस्माकमर्द्धमागहि। महान्महाभि रूतिभिः स्वाहा॥५१५॥ त्वमिन्द्रप्प्रतूर्तिष्ष्वभि विश्श्वाऽअसिस्पृधः। अशस्तिहाजनिताविश्श्वतूर सित्वन्तूर्य्यतरुष्यतः स्वाहा॥५१६॥ अनुतेशुष्मन्तु

1. कलौ गणाधिपः श्रेष्ठस्तेनानन्तफलप्रदः। पूजयेद्देवदेवेशं सर्वविघ्नोपशान्तये॥ (यज्ञ-मीमांसा)



रयन्तमीयतुः क्षोणीशिशुन्नमातरा। विश्श्वास्तेस्पृधः श्नथयन्तमन्न्यवेवृत्रंय्यदिन्द्रतूर्व्वसि स्वाहा॥५१७॥ यज्ञोदेवानाम्प्रत्त्यैतिसुम्नमादित्यासोभवतामृडयन्तः। आवोर्वाचीसुमतिर्व्ववृत्यादँहोश्चिद्याव्वरिवोवित्तरा संत् स्वाहा॥५१८॥ अदब्धेभिः सवितः पायुभिष्ट्वँ शिवेभिरद्यपरिपाहिनोगयम्। हिरण्यजिह्वः सुविताय नव्यसेरक्षामाकिर्न्नोऽअघशँस ऽईशत स्वाहा॥५१९॥ प्रवीरयाशुचयोदद्रिरेवामदद्ध्वर्य्युभिर्म्मधुमन्तः सुता

सः। वर्हंवायोनियुतौयाह्यच्छापिबासुतस्यान्धसोम दाय स्वाहा॥५२०॥ गावऽउपावतातम्महीयज्ञस्य रप्सुदा। उभाकर्णाहिरण्ययया स्वाहा॥५२१॥ काव्ययोराजानेषुक्क्रत्वादक्षस्यदुरोणे। रिशादसासध स्त्थऽआ स्वाहा॥५२२॥ वाहनहोममन्त्राः—तत्रादौ गणपतिवाहनमूषकहवनमन्त्रः—ॐ एषतेरुद्रभागःस हस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्रभागऽआखुस्ते पशुः स्वाहा॥५२३॥ विष्णुवाहनगरुडहवनमन्त्रः—ॐ





सुपर्णोसिगरुत्त्मान्पृष्ठेपृथिव्याःसीद। भासान्तरिक्ष मापृणज्ज्योतिषादिवमुत्तभानतेजसादिशऽउदृंह स्वाहा॥५२४॥ दुर्गावाहनसिंहहवनमन्त्रः—ॐ खड्गोवैश्वदेवःश्वाकृष्णःकर्णोगर्दभस्तरक्षुस्ते रक्षसामिन्द्रायसूकरःसिंहोमारुतःकृकलासः पिप्पकाशकुनिस्तेशरव्यायैविश्वेषान्देवानाम्पृषतः स्वाहा॥५२५॥ सूर्यवाहनअश्वरथहवनमन्त्रः—ॐ सूर्यरश्मिर्हरिकेशःपुरस्तात्सविताज्ज्योतिरुदयाँ२

ऽअजस्रम्। तस्यपूषाप्प्रसवेयातिव्विद्वान्त्सम्पश्यन्न्वि
श्श्वाभुवनानिगोपाः स्वाहा॥५२६॥ शिववाहननन्दी-
हवनमन्त्रः—ॐ आशुःशिशानोव्वृषभोनभीमोघना
घनःक्षोभणश्श्चर्षणीनाम्। सङ्क्रन्दनोनिमिषऽएक
वीरःशतꣳसेनाऽअजयत्साकमिन्द्रः स्वाहा॥५२७॥
लक्ष्मीवाहनउलूकहवनमन्त्रः—ॐ व्वर्षाहूर्ऋत्तूना
माखुःकशोमान्थालस्तेपितृणाम्बलायाजगरोव्वसू
नाङ्कपिञ्जलःकपोतऽउलूकःशशस्तेनिर्ऋत्यैव्वरुणा



यारण्योमेषः स्वाहा॥५२८॥ गायत्रीवाहनहंसहवन-
मन्त्रः—ॐ हꣳसःशुचिषद्व्वसुरन्तरिक्षसद्धोताव्वेदि
षदतिथिर्द्दुरोणसत्। नृषद्द्वरसदृतसद्व्योमसदब्जा
गोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् स्वाहा॥५२९॥
सरस्वतीवाहनहंसहवनमन्त्रः—ॐ हꣳसःशुचिषद्व्व
सुरन्तरिक्षसद्धोताव्वेदिषदतिथिर्द्दुरोणसत्। नृषद्द्वरस
दृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतं
बृहत् स्वाहा॥५३०॥ गंगावाहनमकरहवनमन्त्रः—

ॐ पुरुषमृगश्चन्द्रमसोगोधाकालकादार्व्वाघाटस्तेव्वन
स्प्पतीनाङ्कुकवाकुः सावित्रोहुꣳसोव्वातस्यनाक्क्रोमकरः
कुलीपयस्तेकूपारस्यह्रियैशल्यकः स्वाहा ॥५३१॥
भैरववाहनकुक्कुरहवनमन्त्रः—ॐ खड्गोव्वैश्श्वदेवः
श्श्वाकृष्णः कर्णोगर्द्दभस्तरक्षुस्तेरक्षसामिन्द्रायसूकरः
सिꣳहोमारुतः कृकलासः पिप्पकाशकुनिस्तेशरव्यायै
व्विश्श्वेषान्देवानाम्पृषतः स्वाहा ॥५३२॥ दशदिक्पा-
लेभ्य एकतन्त्रेणबलयः—ॐ प्राच्यैदिशेस्वाहार्व्वा





च्यैदिशेस्वाहादक्षिणायैदिशेस्वाहार्व्वाच्यैदिशेस्वाहा
प्प्रतीच्यैदिशेस्वाहार्व्वाच्यैदिशेस्वाहोदीच्यैदिशेस्वाहा
र्व्वाच्यैदिशेस्वाहोर्द्ध्वायैदिशेस्वाहार्व्वाच्यैदिशेस्वाहा
र्व्वाच्यैदिशेस्वाहार्व्वाच्यैदिशेस्वाहा ॥५३३॥ सूर्या-
दिभ्यएकतन्त्रेणबलयः—ॐ ग्रहाऽऊर्ज्जाहुतयो
व्यन्तोव्विप्प्रायमतिम्। तेषांव्विशिप्प्रियाणां व्वोऽहमिष
मूर्ज्जꣳसमग्ग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्ट्टङ्गृह्णा
म्येषतेयोनिरिन्द्रायत्त्वाजुष्ट्टतमम् ॥५३४॥ क्षेत्रपाल-

बलयः—ॐ नहिस्पशमविदन्नन्यमस्म्माद्वैश्वान
रात्पुरऽएतारमग्नेः। एमैनमवृधन्नमृताऽअमर्त्त्यम्वैश्वा
नरंक्षैत्रजित्यायदेवाः॥५३५॥ बलिनिस्सारणमन्त्रः—
ॐ हिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्क्रन्दतेस्वाहा
ऽवक्क्रन्दायस्वाहाप्प्रोथतेस्वाहाप्रप्प्रोथायस्वाहा
गन्धायस्वाहाग्घ्रातायस्वाहानिविष्टायस्वाहोपवि
ष्टायस्वाहासन्दितायस्वाहाव्वल्गतेस्वाहासीनाय
स्वाहाशयानायस्वाहास्वपतेस्वाहाजाग्ग्रतेस्वाहाकू



जतेस्वाहाप्प्रबुद्धायस्वाहाव्विजृम्भमाणायस्वाहा
व्विचृत्तायस्वाहासꣳहानायस्वाहोपस्स्थितायस्वाहा
ऽयनायस्वाहाप्प्रायणायस्वाहा॥५३६॥ अष्टाहुति
मन्त्राः—ॐ त्वन्नोऽअग्ग्नेव्वरुणस्यव्विद्वान्देवस्यहेडो
ऽअवयासिसीष्ठाः। यजिष्ठोव्वह्नितमःशोशुचानो
व्विश्वाद्वेषाꣳसिप्प्रमुमुग्ध्यस्म्मत्॥५३७॥ सत्वन्नो
ऽअग्ग्नेऽवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्व्युष्टौ।
अवयक्ष्वनोव्वरुणꣳरराणोव्वीहिमृडीकꣳसुहवोन

ऽएधि॥५३८॥ इमम्मेव्वरुण श्श्रुधीहवमद्याचमृडय। त्वामवस्युराचके॥५३९॥ तत्त्वायामिब्ब्रह्मणाव्वन्द मानस्तदाशास्तेयजमानोहविर्ब्भिः। अहेडमानोव्वरुणेह बोध्युरुशꣳससमानऽआयुःप्रमोषीःप्रमोषीः॥५४०॥ अयाश्चाग्ग्नेऽस्यनभिशस्तिपाश्चसत्यमित्वमयाऽअसि। अयानो यज्ञंव्वहास्ययानोधेहिभेषजꣳ स्वाहा॥५४१॥ येतेशतम्वरुणयेसहस्रंयज्ञियाःपाशावितताम्महान्तः। तेभिर्न्नोऽअद्यसवितोतव्विष्णुर्व्विश्श्वेमुञ्चन्तुमरुतः





स्वर्क्काः॥५४२॥ उदुत्तमम्वरुणपाशमस्म्मदवाधमं व्विमध्यमꣳ श्श्रथाय। अथाव्वयमादित्यव्व्रतेतवाना गसोऽअदितयेस्याम॥५४३॥ भवतन्नःसमनसौसचेत सावरेपसौ। मायज्ञꣳ हिꣳ सिष्ट्टम्मायज्ञपतिञ्जातवेद सौशिवौभवतमद्यनः॥५४४॥ [1]पूर्णाहुतिमन्त्राः— ॐ समुद्राद्दूर्म्मिर्म्मधुमाँ२॥ उदारदुपाꣳशुनासम मृतत्त्वमानट्। घृतस्यनामगुह्यंय्यदस्तिजिह्वादेवानाम मृतस्यनाभिः॥५४५॥ व्वयन्नामप्प्रब्ब्रवामाघृतस्या

[1]. विवाहादिक्रियायां च शालायां वास्तुपूजने। नित्यहोमे वृषोत्सर्गे न पूर्णाहुतिमाचरेत्। (मदनरत्ने)

स्म्मिन्न्यज्ञेधार यामानमौभिः। उपब्ब्रह्माश्शृणवच्छ्
स्यमानुञ्चतुः शृङ्गोऽवमीद्गौरऽएतत्॥५४६॥ चत्त्वारि
श्शृङ्गात्रयोऽअस्स्यपादाद्द्वेशीर्षेसप्प्तहस्तासोऽअस्य।
त्रिधाबद्धोव्वृषभोरोरवीतिमहोदेवोमर्त्त्याँ२॥ऽआ
विवेश॥५४७॥ ॐ त्रिधाहितम्पणिभिर्ग्गुह्यमानङ्ग
विदेवासोघृतमन्न्वविन्दन्। इन्द्रऽएकꣳसूर्य्यऽएकञ्ज
जानव्वेनादेकꣳस्वधयानिष्टतक्षुः॥५४८॥ एता
ऽअर्षन्तिहृद्यात्समुद्राच्छतव्व्रजारिपुणानावचक्षे।



घृतस्यधाराऽअभिचाकशीमिहिरण्ण्ययोव्वेतसोम
ध्ध्यऽआसाम्॥५४९॥ सम्म्यक्स्त्रवन्तिसरितोन
धेनाऽअन्तर्हृदामनसापूयमानाः। एतेऽअर्षन्त्यूर्म्म
योघृतस्यमृगाऽइवक्षिपणोरीषमाणाः॥५५०॥
सिन्धोरिवप्प्राध्ध्वनेशूघनासोव्वातप्प्रमियःपतयन्ति
यह्वाः। घृतस्यधाराऽअरुषोनव्वाजीकाष्ठाभिन्दन्नूर्म्मि
भिःपिन्न्वमानः॥५५१॥ अभिप्प्रवन्तसमनेवयोषाः
कल्ल्याण्ण्यःस्म्मयमानासोऽअग्ग्निम्। घृतस्यधाराः

सुमिधोनसन्तताजुषाणोहर्य्यतिजातवेदाः ॥५५२॥
कुन्न्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाक
शीमि। यत्रसोमः सुयतेयत्रयज्ञोघृतस्युधाराऽअभि
तत्पवन्ते॥५५३॥ अब्भ्यर्षतसुष्टुतिङ्गव्यमाजिमस्मा
सुभद्राद्द्रविणानिधत्त। इमंय्यज्ञन्नयतदेवतानोघृतस्य
धारामधुमत्पवन्ते॥५५४॥ धामन्तेव्विश्श्वम्भुवनम
धिश्श्रतमन्तः समुद्द्रेह्रुद्यन्तरायुषि। अपामनीकेसमिथे
यऽआभृतस्तमश्यामधुमन्तन्तऽऊर्म्मिम्॥५५५॥





पुनस्त्वाऽऽदित्यारुद्द्रावसवः समिन्धताम्पुनर्ब्ब्रह्माणो
व्वसुनीथयज्ञैः। घृतेनत्वन्तन्न्वंव्वर्द्धयस्वसत्त्याः सन्तु
यजमानस्यकामाः॥५५६॥ पूर्ण्णादर्व्विपरापतसु
पूर्ण्णापुनरापत। व्वस्नेवव्विक्क्रीणावहाऽइषमूर्ज्जं
शतक्क्रतो॥५५७॥ वसोर्द्धारामन्त्राः—ॐ सप्ततेऽ
ऽअग्ग्रेसमिधः सप्तजिह्वाः सप्तऽऋषयः सप्तधाम
प्प्रियाणि। सप्तहोत्राः सप्तधात्त्वायजन्तिसप्तयोनी
रापृणस्वघृतेनस्वाहा॥५५८॥ शुक्क्रज्ज्योतिश्श्च

चि॒त्रज्ज्यो॑तिश्श्च॒ज्ज्योति॑ष्माँ२श्च । शु॒क्क्रश्च॑र्त्तऽऋत॒पाश्च॒चात्यँ॑हाः ॥५५९॥ ई॒दृङ्चा॑न्या॒दृङ्च॑स॒दृङ्च॒प्प्रति॑सदृङ्च । मि॒तश्श्च॒सम्मि॑तश्श्च॒सभ॑राः ॥५६०॥

ऋ॒तश्श्च॑सत्यश्च॑ध्रु॒वश्च॑ध॒रुण॑श्च । ध॒र्त्ता॑चविध॒र्त्ता॑चवि॒धार॒यः ॥५६१॥ ऋ॒तजि॑च्चसत्त्य॒जिच्च॑सेन॒जिच्च॑सु॒षेण॑श्च । अन्ति॑मित्त्रश्च॒दू॒रेऽअ॑मित्रश्च॒गण॑ः ॥५६२॥

ई॒दृक्षा॑सऽएता॒दृक्षा॑सऽऊ॒षुण॑ः स॒दृक्षा॑स॒ः प्प्रति॑सदृक्षा॑स॒ऽएत॑न । मि॒तासे॑श्च॒सम्मि॑तासोनोऽअ॒द्यसभ॑रसोमरु॒तो य॒ज्ञेऽअ॒स्मिन् ॥५६३॥ स्वत॑वाँ२श्च॒प्प्रघा॒सीच॑सान्तप॒नश्च॑गृहमे॒धीच॑ । क्क्री॒डीच॑शा॒कीचौ॒ज्जे॒षी ॥५६४॥ इन्द्र॒न्दैवी॒र्व्विशो॑म॒रुतोऽनु॑वत्क्र्मा॒नोऽभ॑व॒न्न्यथेन्द्र॒न्दैवी॒र्व्विशो॑म॒रुतोऽनु॑वत्क्र्मा॒नोऽभ॑वन् । ए॒वमि॒मंय्य॑जमा॒नन्दैवी॑श्च॒व्विशो॑मानु॒षीश्चा॒नु॒वत्क्र्मा॒नोभ॑वन्तु ॥५६५॥ इ॒मँस्तन॒मूर्ज्ज॑स्वन्तन्धया॒पाम्प्रपी॑नमग्नेसरि॒रस्य॒मद्ध्ये॑ । उत्सँ॑ज्जुषस्व॒मधु॑मन्तमर्व्वन्त्समु॒द्द्रियँ॒सद॑न॒माविशस्व ॥५६६॥


शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १९२

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता १९३

घृतम्मिमिक्षेघृतमस्स्ययोनिर्घृतेशिश्रुतोघृतम्बस्य धाम। अनुष्ष्वधमावहमादयस्स्वस्वाहाकृतंवृषभवक्षिहव्यम्॥५६७॥ भस्मधारणमन्त्रः—ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्यत्र्यायुषम्। यद्देवेषुत्र्यायुषन्तन्नोऽ अस्तुत्र्यायुषम्॥५६८॥ बर्हिहोममन्त्रः—ॐ देवागातुविदोगातुं वित्वागातुमित। मनसस्पतऽइमन्देवयज्ञꣳस्वाहावातेधाः॥५६९॥ अभिषेकमन्त्राः— देवस्यत्त्वासवितुः प्प्रसवेऽश्विनोर्बाहुब्भ्यांपूष्णोहस्ता



ब्भ्याम्। सरस्वत्यैव्वाचोयन्तुर्य्यन्त्रियैदधामिबृहस्प्पतेष्ट्वासाम्म्राज्ज्येनाभिषिञ्चाम्यसौ॥५७०॥ देवस्यत्त्वासवितुः प्प्रसवेऽश्विनोर्बाहुब्भ्यांपूष्णोहस्ताब्भ्याम्। सरस्वत्यैव्वाचोयन्तुर्य्यन्त्रेणाग्नेः साम्म्राज्ज्येनाभिषिञ्चामि॥५७१॥ देवस्यत्त्वासवितुः प्प्रसवेऽश्विनोर्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम्। अश्विनोर्भैषज्ज्येनतेजसेब्ब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्यैभैषज्ज्येनव्वीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण

बलायश्श्रियैयशसेभिषिञ्चामि॥५७२॥ आपो
हिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन। महेरणायच
क्षसे॥५७३॥ यो वः शिवतमोरसस्तस्यभाजयतेह
नः। उशतीरिवमातरः॥५७४॥ तस्माऽअरङ्गमामवो
यस्यक्षयायजिन्वथ। आपोजनयथाचनः॥५७५॥
पुनन्तुमापितरः सोम्यासः पुनन्तुमा पितामहाः पुनन्तुप्र
पितामहाः। पवित्रेणशतायुषा। पुनन्तुमापितामहाः
पुनन्तुप्रपितामहाः। पवित्रेणशतायुषाविश्वमायु





र्व्यश्नवै॥५७६॥ पुनन्तुमादेवजनाः पुनन्तुमनसाधियः।
पुनन्तुविश्वाभूतानिजातवेदः पुनीहिमा॥५७७॥
पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेप
योधाः। पयस्वतीः प्प्रदिशः सन्तुमह्यम्॥५७८॥
पञ्चनद्यः सरस्वतीमपियन्तिसस्रोतसः। सरस्वती
तुपञ्चधासोदेशेऽभवत्सरित्॥५७९॥ विश्वानि
देवसवितर्दुरितानिपरासुव। यद्भद्रंतन्नऽआ
सुव॥५७४॥ धामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्प

तिं÷। सचैतसोव्विश्श्वैंदेवायज्ञम्प्रावन्तुनःशुभे॥५८०॥
त्वंय्यविष्ष्णुदाशुषोनॄँःपाहिश्शृणुधीगिरं÷। रक्षातोक
मुतत्क्मना॥५८१॥ द्यौःशान्तिरन्तरिक्षꣳशान्तिः÷
प्पृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः÷। व्वनस्प्प
तयःशान्तिर्व्विश्श्वैदेवाःशान्तिर्ब्ब्रह्मशान्तिःसर्व्वꣳ
शान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि॥५८२॥
यतोयतःसमीहसेततोनोऽअभयङ्कुरु। शन्नः÷कुरुप्प्रजा
भ्योऽभयन्नःपशुभ्भ्यः÷॥५८३॥ घृतपात्रछायाव-



लोकनमन्त्रः—ॐ रूपेणवोरूपमब्भ्यागान्तुथोवो
व्विश्श्ववेदाव्विभजतु। ऋतस्यपथाप्प्रेतचन्द्रदक्षिणा
व्विस्वःपश्श्यव्व्यन्तरिक्षंय्यतस्वसदस्यैः॥५८४॥
देवविसर्जनमन्त्राः—ॐ देवागातुविदोगातुम्वित्त्वा
गातुमित। मनसस्प्पतऽइमन्देवयज्ञꣳस्वाहाव्वा
तेधाः॥५८५॥ यज्ञंयज्ञङ्गच्छयज्ञपतिङ्गच्छस्वां
योनिङ्गच्छस्वाहा। एषतेयज्ञोयज्ञपतेसहसूक्तवाकः
सर्व्ववीरस्तञ्जुषस्वस्वाहा॥५८६॥ समुद्रङ्गच्छस्वाहा

ऽन्तरिक्षङ्गच्छ स्वाहा देवꣳ सवितारङ्गच्छ स्वाहा मित्रा वरुणौगच्छ स्वाहाऽहोरात्रेगच्छ स्वाहाच्छन्दाꣳसि गच्छ स्वाहाद्यावापृथिवीगच्छ स्वाहायज्ञङ्गच्छ स्वाहा सोमङ्गच्छ स्वाहा दिव्यन्नभोगच्छ स्वाहाऽग्निम्वैश्श्वा नरङ्गच्छ स्वाहामनोमेहार्दियच्छ दिवन्तेधूमोगच्छतु स्वर्ज्ज्योतिः पृथिवीम्भस्स्मनापृण स्वाहा ॥५८७॥

उत्तिष्ठ ब्रह्मणस्प्पते देवयन्तस्त्वेमहे। उपप्रयन्तुमरुतः सुदानवऽइन्द्रप्प्राशूर्भ्भवासचा ॥५८८॥ कर्तृरक्षा-





बन्धनमन्त्रः—ॐ यदाबध्नन्दाक्षायणाहिरण्ण्यꣳ शतानीकायसुमनस्यमानाः। तन्मऽआबध्नामि शतशारदायायुष्मान्जरदष्टिर्य्यथासम् ॥५८९॥

कर्तृपत्नीरक्षाबन्धनमन्त्रः—ॐ तम्पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुतवाहिरण्ण्यैः। नाकङ्गृभ्णानाः सुकृतस्यलोके तृतीयेपृष्ठेऽअधिरोचनेदिवः ॥५९०॥

कर्तृतिलककरणमन्त्रः—ॐ स्वस्तिनऽइन्द्रोवृद्धश्श्रवाः स्वस्तिनः पूषाविश्श्ववेदाः। स्वस्तिनस्तार्क्ष्यो

ऽअरिष्टनेमिःस्वस्तिनोबृहस्प्पतिर्द्दधातु ॥५९१॥
कर्त्रेआ[1]शीर्वादमन्त्राः—ॐ स्वस्तिनऽइन्द्रोवृद्धश्श्रवाः
स्वस्तिनःपूषाव्विश्श्ववेदाः। स्वस्तिनस्तार्क्ष्योऽअरि
ष्टनेमिःस्वस्तिनोबृहस्प्पतिर्द्दधातु ॥५९२॥ व्विवस्व
न्नादित्यैषतेसोमपीथस्तस्मिन्मत्स्व। श्रदस्म्मैनरोव्व
चसेदधातनयदाशीर्द्दादम्पतीव्वाममश्नुतः। पुमान्पुत्रो
जायतेव्विन्दतेव्वस्वधाव्विश्श्वाहारपऽएधतेगृहे ॥५९३॥
पुनस्त्वाऽऽदित्यारुद्द्रावसवःसमिन्धताम्पुनर्ब्ब्रह्माणोव्व

[1] सर्वत्र कर्मणामन्ते मन्त्राशिषमनुत्तमाम्। दद्युर्विप्राः स्वशाखोक्तामादौ तत्कर्मशाखिनः॥ (संग्रहे)



सुनीथयज्ञैः॥ घृतेनत्वन्तन्वंव्वर्द्धयस्वसत्त्याःसन्तु
यजमानस्यकामाः ॥५९४॥ दीर्ग्घायुस्तऽओषधेख
नितायस्म्मैचत्वाखनाम्म्यहम्। अथोत्वन्दीर्ग्घायु
र्भूत्त्वाशतवल्शाव्विरोहतात् ॥५९५॥ कर्तृपत्न्या-
आशीर्वादमन्त्राः—ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहो
रात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम्। इष्णन्नि
षाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण ॥५९६॥ अना
धृष्टापुरस्तादग्नेराधिपत्यऽआयुर्म्मेदाःपुत्रवतीदक्षिण

तऽइन्द्रस्याधिपत्येप्प्रजम्मेंदाः सुषदापुश्श्चाद्देवस्य सवितुराधिपत्येचक्षुर्म्मेदाऽआश्श्रुतिरुत्तरतोधातु राधिपत्येरायस्प्पोषम्मेदाः। व्विधृतिरुपरिष्ट्टाद्बृहस्प्पतेराधिपत्यऽओजोमेदाव्विश्श्वाब्भ्योमानाष्ट्ट्रा ब्भ्यस्प्पाहिमनोरश्श्वासि॥५९७॥ ॐ यावतीद्यावा प्पृथिवीयावच्चसप्तसिन्धवोव्वितस्त्थिरे। तावन्त मिन्द्रतेग्ग्रहमूर्ज्जागृह्णाम्यक्षितम्मयिगृह्णाम्यक्षि तम्॥५९८॥ यज्ञादिप्रार्थनामन्त्रः—ॐ आयुर्य्यज्ञेन





कल्प्पताम्प्राणो यज्ञेनकल्प्पताञ्चक्षुर्य्यज्ञेनकल्प्पताᳪ श्श्रोत्रंयज्ञेनकल्प्पताम्वाग्यज्ञेनकल्प्पतामनोयज्ञेन कल्प्पतामात्माय्यज्ञेनकल्प्पताम्ब्रह्मायज्ञेनकल्प्पतां ज्ज्योतिर्य्यज्ञेनकल्प्पताᳪ स्वर्य्यज्ञेनकल्प्पताम्पृष्ठं यज्ञेनकल्प्पताम्यज्ञोयज्ञेनकल्प्पताम्॥ स्तोमश्च्च यजुश्च्चऋक्चसामचबृहच्चरथन्तरञ्च। स्वर्द्देवा ऽअगन्मामृताऽअभूमप्प्रजापतेः प्प्रजाऽअभूमव्वेट् स्वाहा॥५९९॥ सर्वदेवतानमस्कारमन्त्रः—अग्निर्द्देवता

व्वातोदे॒वता॒सूर्य्यो॑दे॒वता॑चन्द्रमादे॒वता॒व्वस॑वोदे॒वता
रु॒द्रादे॒वता॑ऽऽदि॒त्यादे॒वता॑म॒रुतो॑दे॒वता॒व्विश्वे॑दे॒वा
दे॒वता॒बृह॒स्पति॑र्दे॒वतेन्द्रो॑दे॒वता॒व्वरु॑णोदे॒वता ॥६०॥

॥ इति श्रीमद्वाजसनेयिमाध्यन्दिनशाखीयशुक्लयजुर्वेदमन्त्रसंहिता सम्पूर्णा ॥

वेदाचार्य पण्डित अशोककुमारगौडेन

परिष्कृत्य सम्पादिता च

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता २०६



# परिशिष्टो भागः

महामहोपाध्याय स्व० पं० विद्याधर गौड आहिताग्नि पूर्व—संकाय प्रमुख (धर्मशास्त्र संकाय)
काशी हिन्दू विश्वविद्यालय, वाराणसी द्वारा लिखित व्यवस्था।

शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता २०७

# वेदस्याध्ययनम्

इह खलु सर्वोऽपि जन्तुरात्मनः सुखप्राप्तिं समीहते दुःखपरिहारं च। उभयमप्येतज्जन्यता- माश्रयते। अखण्डब्रह्मानन्दात्मकं वर्जयित्वा नित्यसुखमन्यस्य सर्वस्यापि वृत्त्यात्मकस्य सुखदुःखादेर्जन्यतामेवाङ्गीकुर्वते वेदान्तिनोऽपि। तस्यैतस्य वृत्तिरूपस्य सुखस्यावश्यं केन- चित्कारणेन भवितव्यम्।

लोके हि जन्यमात्रं किञ्चन कारणमपेक्षते। अत एव प्रकृतयोः सुखप्राप्तिदुःखपरिहारात्मकयोः कार्ययोरपि यत्किञ्चित्कारणजन्यत्वनियमावश्यम्भावे सति किं तत्कारणमिति कारणगवेषणायां बुद्धिरुदेति। एवं विविधवैचित्र्यशालिनोऽस्य चराचरात्मकस्य जगतोऽपि न केवलं केन- चित्कारणेन भाव्यम्; किन्तु तद्गतेन वैचित्र्येणाप्यवश्यं भाव्यमिति निश्चिनुते परीक्षकः परीक्षायां प्रवृत्तः।

तत्र च प्रथमं लौकिकैः प्रमाणैस्तत्परीक्षितुमीहमानस्तत्र तत्र प्रत्यक्षानुमानदिषु बहुशो दृष्टव्यभिचारः स्वप्रवृत्तौ वैफल्यमेव समश्नुते। एवं लौकिकेषु प्रमाणेषु विफलप्रयत्नोऽयमलौकिकं पुरुषबुद्ध्यगोचरं प्रमाणं किञ्चन मृगयते।



शुक्ल-यजु-र्वेदीय-मन्त्र-संहिता २०९

अन्विष्य च कश्चन शब्दराशिमलौकिकार्थवेदकं पुरुषबुद्ध्यसंस्पृष्टं सर्वार्थावद्योतकमुपलभते। उपलभ्य च स्वस्थचित्तो भवति। स्वस्थचित्तश्च तदुक्तेन पथा यथावदनुतिष्ठति। अनुष्ठाय च स्वेप्सितं प्राप्नोतिपदम्, प्राप्तफलश्च सन्तुष्यति। तत्र योऽयं शब्दराशिरलौकिकार्थवेदकतयाऽने-नोपलब्धः स एव वेदपदाभिधेयः। तत्प्रतिपाद्य एव चार्थो धर्मशब्देन व्यवहारं लभते। स एव चाद्यः पुरुषार्थः सर्वेषां पुरुषार्थानां मूलभूतः।

अत्र एव च त्रयोऽप्यन्ये पुरुषार्थाः प्रभवन्ति। स एव च सर्वस्यापि श्रेयसः सम्पादकः, दुःखस्य परिहारकश्च। अस्मिन्नेव च सर्वे लोकाः प्रतिष्ठिताः। उक्तं हि—

"**धर्मो विश्वस्य जगतः प्रतिष्ठा धर्मेण पापमपनुदति**" इति।

इममेव च धर्मं बहुप्रकारं स्वेतरप्रमाणाविषयं जनिमदनुग्रहाय अवबोधयितुं प्रवृत्ता वेदाः। अत एव च तेषां वेदत्वम्।

उपदिशन्ति हि वेदलक्षणमेवमार्याः—

"**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते।**
**एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥**" इति।

पूर्वोक्तस्य अलौकिकश्रेयः साधनभूतस्य धर्मस्य प्रमाणान्तरेणैव जिज्ञासमानाः तदर्थं बहु क्लिश्यन्तस्तत्र च प्रयत्नवैफल्यमवाप्य अन्ते भगवन्तं वेदमेव तद्विषये शरणीकुर्वाणा



अस्मत्प्राचीनतमा महर्षयो मन्वादयश्च सर्वज्ञकल्पा अपि—"**वेदो धर्ममूलम्**" (गौ० धू० सू०), "**उपदिष्टो धर्मः प्रतिवेदम्**" (बौ० ध० सू०) "**श्रुतिस्मृतिविहितो धर्मः**" (वा० ध०), "**वेदोऽखिलो धर्ममूलम्**" (मनुस्मृतिः) इत्येककण्ठेन वेदस्यैव धर्ममूलतामवोचन् प्रथमम्। अनन्तरं च तदनुसारिणीनां स्मृतीनामपि तदनुसारेणैव प्रामाण्यमवोचन्। तदुभयानुसारिणश्च शिष्टाचारस्य। एवं च स्मृतेः शिष्टाचारस्य वा यदुक्तं धर्मे प्रामाण्यं तद्वेदाविरोधेनैव। यदि तु केनाप्यंशेन तयोर्वेदेन सह विरोधः प्रतिभायात्तदाऽग्राह्यतैव स्यात्।

अनेनैव चाभिप्रायेण—

"**धर्मज्ञसमयः प्रमाणं तदलाभे शिष्टाचारः प्रमाणम्**" (वा० ध०) इत्यादिकं महर्षयः प्राब्रुवन्। न हि धर्मस्य लौकिकप्रामाण्यग्राह्यं मूर्तिमद्वा स्वरूपं किञ्चिदस्ति।

अत एव च मीमांसकैरपि "**चौदनालक्षणोऽर्थो धर्मः**" (जै० सू०), "**श्रेयः-साधनता ह्येषां नित्यं वेदात्प्रतीयते**" (श्लो० वा०) इत्यादि जोधुष्यते।

यद्यपि च यागदानहोमादिक्रियास्येव धर्मत्वं वदतां क्रियायाः प्रत्यक्षविषयतां चोररीकुर्वतां भाट्टानां मते धर्मस्यापि प्रत्यक्षविषयता प्रसज्जयते, तथापि न ते क्रियात्वेन रूपेण धर्मत्वं वदन्ति, किन्तु अलौकिकश्रेयःसाधनत्वेन रूपेण। तच्च स्वरूपं न प्रत्यक्षादिगम्यं किन्तु वेदैकसमधिगम्यं तदनुसारिस्मृत्यधिगम्यं तदनुशीलनैकसंस्कारपरिपक्वशिष्टबुद्धिबोध्यं चेति

नान्यदस्ति किञ्चिद् धर्मस्वरूपपरिचायकम्। इममेवाभिप्रायमनुसन्दधानो भगवान् महर्षिरापस्तम्बोऽपि—

"**न हि धर्माधर्मौ चरत आवां स्व इति न देवगन्धर्वाः, न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति, यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो यं गर्हन्ते सोऽधर्मः**" (७।६-७) इति।

अरण्यसिंहन्यायेन तत्तादृशप्रमाणान्तरानधिगतधर्मस्वरूपावदेकत्वादेव वेदस्य प्रामाण्यं गौरवं च निरतिशयमनुसन्दधते प्रामाणिकाः परीक्षकाश्च। तादृशपुरुषबुद्धिदोषलेशाद्यसंसृष्टसर्वज्ञकल्पवेदबोध्यत्वादेव च धर्मे निरङ्कुशं गौरवमाबध्नन्ति। एतादृशमतिगहनवेदगम्यं धर्मस्वरूपं यथावदधिगन्तुमनीशानां मन्दमतीनामनुग्रहायैव, अर्थात् तेऽपि धर्मस्वरूपं यथावदवबुद्ध्य अनुष्ठाय स्वाभिलषितं फलं सुखविशेषं दुःखपरिहारं वा प्राप्य निर्वृतिं भजेयुः, तथा तदनुगृहीतमेव सर्वाण्यङ्गानि शिक्षाकल्पव्याकरणनिरुक्तज्योतिश्छन्दांसि, उपाङ्गानि पुराणन्यायमीमांसारूपाणि, किं बहुना समस्तमपि संस्कृतं वाङ्मयं भगवन्तं वेदपुरुषमवबुद्ध्यैव वेदार्थमुपबृंहितुं वेदप्रतिपाद्यं धर्मस्वरूपं सरलेन सन्दर्भेण विवरीतुमाख्यायिकोपाख्यायिकादिकथनपूर्वकं तेषु तेषु धर्मेषु तत्तदधिकारिणो जनान् प्रवर्तयितमुमेव च लोके प्रवृत्तम्।

न केवंल संस्कृतवाङ्मयम्, भाषामया अपि ग्रन्था भारतदेशीयाः सर्वेऽपि तमेवार्थं विवृण्वन्ति बहुभिः प्रकारैः। इतश्च सर्वोऽप्यास्माकीनः शब्दसन्दर्भः साक्षात्परम्परया वा

शुक्ल-यजुर्वेदीय-मन्त्र-संहिता
२१२



भगवतो वेदपुरुषस्य अवयवत्वमेव समश्नुत इति वस्तुतः पर्यालोच्यमाने भगवतः सर्वव्यापिनः सर्वशक्तिमतः परमेष्ठिनोऽपेक्षया भगवति तत्तादृशे वेदपुरुषेऽन्यूनां मतिं गौरवं चादधाना वयं मन्यामहे नानौचित्यभागियमस्माकं मतिरिति। एवं च सर्वेषां प्राणिनां साक्षात्परम्परया वा निखिलपुरुषार्थप्रापको धर्मः यथाधिकारम्। स च धर्मो यथावदवगन्तुं शक्यते वेदादेव। वेदादेव च तदनुसारिप्रमाणेभ्योऽवगतो यथानियममनुष्ठितश्च यथाविधि प्रयोजनाय कल्पते। स च वेदो विधिवदधीत एव स्वार्थमवबोधयन् फलत्यभिलषितं फलम्।

नियमरहितेन सत्राधीतोऽपि वा सनियमध्ययनं विना (गुरुमुखोच्चारणानूच्चारणमत्राध्ययनमभिप्रेतम्) पुस्तकपाठादिना गृहीतः सुबह्वभ्यस्तोऽपि, कर्मणि यथाविधि प्रयुक्तोऽपि न किञ्चन फलं प्रसूते।

अतो ये केचनेदानीं वेदाध्ययनाङ्गतया स्मृत्यादिविहितान् निखिलानपि नियमान् दूरीकृत्य यथाकथञ्चिद्रघुवंशादिकाव्यवत्कृतधारणास्तमेव च शब्दराशिं कर्मसु प्रयुञ्जाना निःसारेण तेन शब्दराशिना कर्मणि प्रयुक्तेन तदनुसारेण कृतेन प्रसूतं किमपि फलमपश्यन्तः कर्मण एव वैदिकस्य वैफल्यं, मन्त्राणां निःसारतां वाऽभिदधतः श्रद्धालून् जनान् मोहयन्ति; तदिदं तेषामात्मदोषाज्ञानमेव 'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति' इति न्यायमनुसरताम्।

प्रतिदिनमेषा दुर्दशा प्रवर्द्धते वैदिकस्य मार्गस्य। नूनमियं निरोद्धव्या धार्मिकैः श्रद्धालुभिर्वेदमार्गनिरतैः।

शुक्ल-यजुर्वेदीय-मन्त्र-संहिता
२१३

एतावतेदमधिगतम्—यद् यथानियममधीतादेव वेदादर्थज्ञानं सम्पाद्य कर्माण्यनुष्ठेयानि। तादृशा एव मन्त्राः कर्मसु प्रयोक्तव्याः, तादृशान्येव च कर्माणि स्वं स्वं फलं दातुमीशते, नान्यथा। यथा अङ्कुरजननसमर्थां शक्तिमात्मनि दधाना अपि व्रीह्यादयो देशकालसंस्कारादिरहिता नाङ्कुरं जनयन्ति, तद्वत् कर्मापि फलजननशक्तिसामग्र्यविशिष्टं सदपि विगुणमनुष्ठितं चेन्नैव फलं ददाति। अतो धर्मतः फलं प्रेप्सुभिः पुरुषैः प्रथमतो वैगुण्यनिराकरणे यतितव्यम्। अतएवोक्तं शबरस्वामिना—

**"स यथावदनुष्ठितः पुरुषं निःश्रेयसेन संयुनाक्ति"** इति।

अतः पुरुषाभिलषितसर्वश्रेयःप्रापको धर्मः, स च वेदैकसमधिगम्यः। वेदोऽपि बहुधा। विभिन्नो विध्यर्थवादमन्त्रनिषेधनामधेयात्मना सर्वांशेनापि धर्ममेवाभिवदति। विधिर्हि धर्मस्वरूपं तदङ्ग द्रव्यं देवतामन्यद्वा विदधाति। अर्थवादोऽपि तमेव स्तौति पुरुशस्य रुच्युत्पादनद्वारा तत्र तं प्रवर्तयितुम्। मन्त्रो हि अनुष्ठानकाले उच्चारितः सन् तमेव स्मारयति धर्मम्। निषेधोऽपि च अधर्मस्वरूपं ज्ञापयन् तदितरस्य धर्मतामाक्षिपति। नामधेयमपि कर्मणः संज्ञारूपमितरस्माद् धर्मस्वरूपं व्यावर्तयत् सङ्कल्पव्यवहारादौ साहाय्यमाचरति।

अतएव च तत्र तत्र सूत्रकारो भगवान् जैमिनिः **"तद्भूतार्थानां क्रियार्थेन समाम्नायः, आम्नायस्य क्रियार्थत्वात्, उक्तं समाम्नायैदमर्थ्यं स्यात्"** इत्यादि बहुत्र वदति।



एवं च वेदस्य एकैकोऽप्यंशो धर्मप्रतिपादकतां न व्यभिचरति, तद्द्वारा पुरुषस्य श्रेयःप्राप्ति-सम्पादनान्न हीयते। तेनैव चात्मानं कृतार्थं मनुते। अतएव भगवान्मनुरपि—

**"वेद एव द्विजातीनां निःश्रेयसकरः परः।"**

इति स्पष्टमूचे। अतः सर्वात्मना पुरुषनिःश्रेयसकरं वेदं यथावधीत्य यथानियमं च तदर्थं ज्ञात्वा यथाविधि यथाधिकारं च तानि तानि कर्माण्यनुष्ठाय जनाः स्वाभिलषितां सुखप्राप्तिं दुःखपरिहारं वा प्राप्नुयुरित्याशास्महे। सर्वमिदं कुक्षौ कृत्वैवाभिदधति स्मास्मदाचार्याः पूर्वतनाः—

**"वेदोऽखिलो धर्ममूलम्"** इति।

**—महामहोपाध्याय पं० विद्याधर गौड**

# वेदापौरुषेयत्वम्

इदानीं स मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदपदाभिधेयोऽस्मादृशैः पुरुषैः प्रत्यक्षादिप्रमाणैर-गतानर्थान् परान् प्रत्याययितुं तदावेदकशब्दान् सङ्ग्रथ्य वेदात्मना विरचितः, उत सर्वज्ञेन सर्वशक्तिमता परमेश्वरेण विरचय्य लोके प्रख्यापितः। अथवा कालाकाशादिवत् नित्य एवायं शब्दराशिः केनापि नोत्पादित इति विचार्यते।

तत्र केचिदेवमाशेरतेऽधुनातनाः पाश्चात्याः पण्डिताः—(१) योऽयं मन्त्रब्राह्मणात्मना द्विधा विभक्तो ग्रन्थराशिरार्याणां धार्मिकेषु ग्रन्थेषु उच्चतमां कोटिमधितिष्ठति, स आर्यावर्तनिवासिभिः प्राचीनैर्बहुवेदिभिर्महर्षिभिरेव तात्कालिकीं परिस्थितिमपरोक्षीकृत्य तामेव च ग्रन्थारूढां कर्तुमारचितो ग्रन्थराशिरेव। अतएव यत्र ते न्यवात्सुः, तत्रत्यानां नदीनां पर्वतानां च नामानि बहून्युल्लिखितानि। तत्काले च या या देवतास्तेषां मनसि स्फुरिता आसन् तास्तास्तैःस्तुता मन्त्रेषु। त एव मन्त्रा एकत्र सङ्गीकृता ऋग्वेद इत्युच्यते। अयमेव ऋक्संहिता इति चोच्यते। सर्वापेक्षया प्राथमिकोऽयं ग्रन्थः। गच्छति च कस्मिंश्चन काले ततो यजुर्वेदस्तत्कुलीनैरेव कैश्चिन्महर्षिभिरारचित इत्यादि। तत्रापि च मन्त्रभागानां प्रथमं निर्माणम् पश्चाद् ब्राह्मणभागानाम्।

(१) मेकडानलप्रभृति।

शुक्ल-यजुर्वेदीय-मन्त्र-संहिता २१६



एवं मन्त्रब्राह्मणयोर्महर्षिप्रणीतत्वे सिद्धे कोऽसौ कालो भवितुमर्हति यत्र वेदाः प्रणीता इति जिज्ञासायां समुदितायाम् ईसवीयशताब्द्याश्चतुःसहस्रेभ्यो वर्षेभ्यः पूर्वं नैवासन् वेदाः। तदनन्तरमेव सर्वेऽपि वैदिका ग्रन्थाः समारचिताः। अतश्च ईसवीयाब्दारम्भात्पूर्वं चतुःसहस्र्यभ्यन्तरकाल एव रचनाय समारब्धो वेदराशिः क्रमशस्तैर्महर्षिभिरारचितः प्रवर्द्धिं गतः। तादृशी च रचना ईसवीयशताब्द्यवधि किञ्चित्कालपर्यन्तमपि अनुवृत्ताऽभूत्। तत्रापि मन्त्राणां रचनं पूर्वं, ततो ब्राह्मणभागस्येति।

अत्रेदमार्यावर्तनिवासिभिः सूक्ष्मेक्षिकया विचारणीयम्। इतो वर्षसहस्रद्वितयात्पूर्वं भगवान् पतञ्जलिरासीत् इति तैरेव पाश्चात्यपण्डितवर्यैर्निर्णीतं बहुत्र बहुभिः। ततोऽपि बहुप्राचीनकालं समलंकृतवान् महर्षिर्जैमिनिः। ततोऽपि प्राचीनतमः कश्चन् मीमांसाचार्यः काशकृत्स्निरासीत् इति भगवत्पतञ्जलिभाष्यालोकनेनैवावगम्यते। यत उक्तं तैः

“**काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी**” (पा० ४।१।१ आ०) इति।

पाणिनिसमकालिकेन महर्षिणि कात्यायनेनापि स्वग्रन्थेऽनूदितोऽयं काशकृत्स्निः।

“**सद्यस्त्वं काशकृत्स्निः**” (४।३।१७) इति।

पाणिनिकालश्च ख्रिष्टजन्मतः पूर्वं सप्तमी शताब्दीति तैरङ्गीकृतम्। यद्यपीदं नास्मन्मनो रञ्जयति, यतः सत्यव्रतसामश्रमिणा निरुक्तालोचने क्लेरष्टम्यामेव शताब्द्यां ख्रिष्टजन्मतश्च प्राक् चतुर्विंशति–

शुक्ल-यजुर्वेदीय-मन्त्र-संहिता २१७

शताब्द्यामिममार्यावर्तं भूषयामास पाणिनिरिति बहुभिः प्रमाणैरुपपादितम्, तथापि पाश्चात्य-पण्डितोक्तिपर्यालोचनयाऽपि इदं स्पष्टमवगम्यते—भगवान् काशकृत्स्निराचार्य इतो वर्षसहस्रत्रित-यात्पूर्वं भूमिमिमामलञ्चकारेति। तेन च वेदानामपौरुषयत्वं साधितमेव भवेदित्यप्यभ्यूह्यते।

यद्ययमभ्यूहः समञ्जसः स्यात्तदा तेनापि काशकृत्स्निना वेदकर्ता कश्चित् नैव श्रुतो न केवलम्, किन्तु अपौरुषेयत्वमेव तदानीं प्रथितमासीत् इत्यप्यभ्युपगन्तव्यम्। यदि नाम तत्कालाद् वर्षसहस्रात्पूर्वं वेदा रचिता अभविष्यन्, तदा कथं नाम नास्मरिष्यन् तदानीन्तनाः पुरुषाः, विशेषतो महर्षिराचार्यः काशकृत्स्निः सर्वज्ञकल्पः? वयमल्पमतयोऽपि यदि नाम इतो वर्षसहस्रत्रियात् वर्षसहस्रचतुष्टयाद्वा पूर्वकालिकमितिहासमनुमातुं शक्नुयाम, तर्हि को नाम तादृशो महान् प्रतिबन्ध एषामासीत् स्वपूर्वकालिकेतिहासपरिज्ञाने, येन ते सर्वथा तमपरिज्ञाय वेदेऽपौरुषयत्वं साधयन्ति। अन्तेऽपि प्राचीनकालिकैस्तत्तच्छस्त्राणां प्रवर्तयितृभिर्महर्षिभिः कैरपि वेदकर्ता न ज्ञात इति पूर्वोक्तैः प्रमाणैरवगम्यते। अतएव चात्र बहुपरिश्रान्तैर्मीमांसकैः प्राचीनैः सूत्रकारैस्ततः किंचिदर्वाचीनैर्भाष्यकारादिभिश्च वेदेऽपौरुषेयत्वस्वीकरणं विना नान्या गतिरस्तीति मत्वैव तदङ्गीकृतम्। जैमिनिर्हि भगवान् पौरुषेयत्वखण्डनप्रस्तावे सूत्रयति—

**"उक्तं तु शब्दपूर्वत्वम्"** (१।१।२९) इति।

तस्यायमभिसन्धिः—वयं तावत्पश्यामः, ये नाम अधीयते वेदमिदानीन्तनाः, सर्वेऽपि ते गुरुमुखादेवाधीयते, ये च तेषामध्यापयितारो गुरवस्तेऽपि स्वगुरोः सकाशादधीत्यैवाध्यापयन्ति,



न पुस्तकादिकं स्वयं दृष्ट्वा। एवमेव सर्वदाऽपि इयमेवाध्ययनपरम्परा प्रचलति स्म इत्यनुमातुं शक्यते। इदमेव चानुमानमेतत्सूत्राऽभिप्रायभूतं विस्पष्टयति स्म वार्तिककारः—

**"वेदास्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।**
**वेदाध्ययनसामान्यादधुनाऽध्ययनं यथा॥"**

(श्लो० वा० वाक्याधि० ३६६)

इत्यनेन वार्त्तिकेन।

एवं च न कदापि तादृशः काल आसीत् यत्र वेदा वा तदध्ययनं वा नासन्। किन्तु सार्वादिकोऽयं व्यवहारः प्रवर्त्तते स्म। किञ्च वयं ग्रन्थराशिमिममध्ययनेनाध्यापनेन वा मात्रामात्रमुप्यपरित्यज्य पालयामः। तत्तादृशैः सर्वैरीश्वरतुल्यतया संरक्ष्यमाणस्य पूज्यमानस्य ग्रन्थस्य यदि कर्ताऽपि कश्चित्स्यात् तर्हि कथं तं वयं प्रस्मर्तुमीश्महे परित्युक्तं वेति।

केचिदाशेरते—पुरुषनिर्मितत्वाङ्गीकारे दौर्बल्यं मन्यमानैस्तत्र दार्ढ्यसम्पादनायैव पौरुषेयत्वं जानद्भिरेव भवद्भिः। स कर्त्ताऽपह्नुत इति। नेदं प्रेक्षावतां बुद्धिमनुरञ्जयति। यतो वयं भारतीया धर्मलिप्स्वोऽद्यापि भारतभागवतादीन् ग्रन्थान् पुरुषकृतत्वेन निःसंशयं जानन्तोऽपि तत्र सुतरामाद-रातिशयमेव प्रकटीकुर्मः। पुरुषकृतत्वमभ्युपगच्छद्भिरपि व्यासवाल्मीकिप्रभृतिभ्योऽन्यून-महिमभिरेव महर्षिभी रचितो वेदराशिरित्यभ्युपगन्तव्यं भवति। यद्येवं तादृशेषु महर्षिषु तत्र तेषु वा ग्रन्थेषु को नाम धार्मिकः पुरुषोऽनादरमाविष्कर्तुं प्रभवेत्, तानेकान्ततो विस्मरेद्वा।

अतोऽवश्यं स्मर्तव्यानां पुरुषधौरेयाणां वेदकर्तॄणां कदापि यदा विस्मरणमद्यत्वे पूर्वतने वा नासीत्, तदा अस्य वेदराशेर्नास्त्येव कर्तेति निश्चय एव साधीयान्। कर्तुरुच्छेदो हि क्वचिद्देशस्यैवोच्छेदेन वा अध्येतृपुरुषाणां सर्वनाशेन वा भवितुमर्हति। न तदुभयमत्र संभाव्यते। यतो वयं तामेवानुपूर्वीमक्षरराशिं च तादृशमेवेदानीमप्यधीमहे। तत्र कर्ता परं विस्मृत इति साहसमात्रमिदम्। एत एव दृश्यादर्शनबाधितोऽयं वेदेषु कर्ता।

ये तावदस्मानेवोपहसन्ति—भवतामेव केचन तीर्थकारा वेदस्येश्वरकृतत्वमुद्घोष्य पौरुषेयतां विस्पष्टं साधयन्ति, कथं भवद्भिरन्यो देशान्तरीय उपालभ्यतेऽस्मिन्विषय इति, तान्प्रति इदमेव प्रतिवक्तुमभिलषामो वयम्, न तैस्तीर्थकारैः सहास्माकं विरोधः। नहि ते अस्मादृशपुरुषकृतत्वमर्वाचीनकालिकत्वं वा वेदस्याभ्युपगच्छन्ति। किन्तु सर्वज्ञस्य सर्वशक्तिमतः परमेश्वरस्यैव तदङ्गीकुर्वते। नैतावता पञ्चसहस्रेभ्यो वर्षेभ्यः पूर्वं नासीद्वेदराशिरित्यवगम्यते। न वयं पाश्चात्या इव ततः पूर्वं जगदभाववादिनः। अस्माकं तु कल्पा बहवः, तेऽपि कल्पपूर्वाः। अतोऽस्मिन् कल्पे वेदराशिरयं प्रथमं निर्मित इति केन वा सूक्ष्ममतिनाऽपि वक्तुं शक्यते।

**"प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते"**

इति इदमपि पूर्वपूर्वकल्पे श्रुतेरस्तित्वमवबोधयति। पूर्वमन्वन्तरस्थितानुपूर्वीसदृशानुपूर्वीका एतत्कल्पीया श्रुतिरपि इति तु परं युक्तियुक्तमेव। अतो वेदराशेरीश्वरकृतत्ववादिनस्तेऽपि



तीर्थकारा अपौरुषेयत्ववादिभ्यो मीमांसकेभ्यो नातिदूरं गच्छन्ति। परन्तु ईश्वरकृतत्वमपि न तैः प्रमाणेन साधयितुं शक्यते। किन्तु शब्दोच्चारणस्य लोके पुरुषकृतत्वदर्शनात् वैदिकस्यापि शब्दराशेः तदानुपूर्व्या वा पुरुषकृतत्वं सामान्यतोऽनुमिमाना अस्मदादेस्तत्र कर्तृत्वासंभवात् ईश्वरमेव कर्तारमभिमन्यते।

मीमांसकास्तु "सर्वोऽप्युत्सर्गः सापवादः," नहि लौकिकशब्दसन्दर्भस्य पुरुषकृतत्वे वैदिकशब्दराशिनाऽपि तथैव भाव्यमिति समस्ति नियमः। सर्वं तु प्रमाणसमधिगम्यम्। यदि वयं प्रमाणेनोपलभामहे तर्हि तत्तथेति निश्चेतुं शक्नुमः। लौकिकेषु शब्दराशिषु सुदृढेन प्रमाणेनोपलभामहे कर्तारमिति तत्र सकर्तृकतामङ्गीकुर्मः। वैदिकेषु च तेषु प्रयत्नेनान्विच्छन्तोऽपि न तं ज्ञानगोचरतामापादयितुमीश्महे इति तत्रापौरुषेयतामेव मन्यामहे। नहि प्रमाणेनानधिगतोऽर्थः स्वमनीषया कल्पयितुं शक्यते। अतः शब्दस्य सकर्तृकत्वे उत्सर्गसिद्धेऽपि वैदिकशब्दे तदपोद्यत इति कर्तारं निषेधन्ति वेदे। अयमेवाशयः "**तस्मात्कारणादवगच्छामो, न कृत्वा संबन्धं व्यवहारार्थं केनचिद्वेदाः प्रणीता इति, यद्यपि च विस्मरणमुपपद्येत तथापि न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहि। यथा विद्यमानस्याप्यनुपलम्भो भवतीति, नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे**" (शा० भा० १।१।५) (१) इति।

(१) चौखम्भासंस्कृतसीरिजमुद्रितपुस्तके पृ० १२ द्रव्यम्।

''येऽपि हि पौरुषेयतां मन्यन्ते तेऽपि नैव परम्परया तत्र कर्तृविशेषस्मरणं शक्नुवन्ति वदितुम्। सामान्यतोदृष्टेन कर्तारमनुमाय स्वाभिमतं कर्तारं तत्र निक्षिपन्ति, केचिदीश्वरम्, अन्ये हिरण्यगर्भम्, अपरे प्रजापतिम्। न चायं नानाविधो विवादः परम्परया कर्तरि मन्वादिवत्स्मर्यमाणे कथंचिदवकल्पते। नहि मानवे भारते शाक्यग्रन्थे वा कर्तृविशेषं प्रति कश्चिद्विवदते. तस्मात्स्मर्तव्यत्वे सति अस्मरणाददृश्यादर्शनबाधितं सामान्यतो दृष्टं न शक्नोति कर्तारमवसाययितुम्'' (शास्त्र दी० १।१।८) इति च (१) भाष्य-शास्त्रदीपिकादिग्रन्थैर्निपुणतरमुपपादितः। अतोऽस्मत्प्राचीनानामस्माकं च अद्य यावदयमेव निर्णयो—वेदः सर्वथा न कृत्रिम। इति।

सति चैवं वेदे मन्त्रभागे ब्राह्मणभागे वा यान्यर्वाचीनानां केषांचन राज्ञामन्येषां वा पुरुषविशेषाणां देशविशेषाणां नद्यादीनां वा नामानि श्रूयन्ते, कथं तेषामुपपत्तिरिति सत्यमिदं प्रतिपत्तव्यमवशिष्यते। तत्र ह्येवमस्मत्प्राचीना अभिसन्दधति - वेदे यानि नामानि श्रूयन्ते, यानि चाख्यानानि, न तानि विशिष्य केषांचिद्राज्ञां पुरुषविशेषाणां वा नामान्यासन् तच्चरितानि वा। किन्तु नित्या श्रुतिः संव्यवहारार्थं प्ररोचनार्थं वा नामाख्यानादीनि परिकल्प्य संव्यवहरति स्म। तानि च वेदारूढानि पवित्रतमानीति कृत्वा तदा तत्रोत्पन्नानां पुरुषधौरेयाणां नामत्वेन

(१) निर्णयसागरमुद्रितपुस्तके पृ० १६२ द्रष्टव्यम्।





तदाचरितत्वेन च तैस्तैः परिकल्पितानि सन्ति। तत्र प्रथमपरिकल्पकः साक्षात्प्रजापतिरेव। तत इयं रीतिरनुसृता बहुभिः। अतो वेदस्थितान्येव नामानि एभिः स्वनामत्वेन परिकल्पितानि, न तु तदाचरितानि दृष्ट्वा तदनन्तरं वेदो रचित इति।

**''वेदेन नामरूपे व्याकरोत्सतासती प्रजापतिः।''**

**''सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।**
**वेदशब्देभ्य एवादौ देवादीनां चकार सः॥''**

(विष्णु पु० ५।६२)

इत्याद्याः श्रुतिस्मृतयोऽत्र बह्व्योऽनुकूलाः।

यद्यपीदमाधुनिकानां पाश्चात्यशिक्षासुशिक्षितमतीनां तत्संसर्गाकलितसंस्कारविशेषाणां केषाञ्चन पण्डितवर्याणमपि न मनसि मनागपि पदं निदधाति, तथापि अत्र परिश्राम्यता मया पूर्वाचार्याणां योऽस्मिन्विषये सुदृढो निश्चय आसीत्, यश्चास्माकमपि पूर्वाचार्येषु अश्रद्दधतामाधुनिकैरुक्त्या-भासैरकम्पनीयोऽद्य यावद्वर्वर्त्ति, स प्रेक्षावतां पुरतो निक्षिप्तो दृष्ट्वा इतस्ततः प्रमाणम्।

***—महामहोपाध्याय पं० विद्याधर गौड***

## हमारे यहाँ से प्रकाशित कर्मकाण्ड की अद्वितीय पुस्तकें

### पं० अशोक कुमार गौड द्वारा लिखित टीकाकृत पुस्तकें—

१. विष्णुयागपद्धतिः
२. गणपतिप्रतिष्ठापद्धतिः
३. कुण्डनिर्माण-स्वाहाकारपद्धतिः
४. श्राद्धपारिजात
५. काली-रहस्य
६. विवाहपद्धतिः
७. नारायणबलिप्रयोगः
८. रुद्राभिषेकपूजापद्धतिः
९. नित्यकर्मपद्धतिः
१०. हरिवंशपुराण (भाषा)

### पं० शिवदत्त मिश्र द्वारा लिखित टीकाकृत पुस्तकें—

१. हनुमद्-रहस्य
२. गायत्री-रहस्य
३. दुर्गार्चनपद्धतिः
४. ग्रहशान्तिपद्धतिः
५. वाशिष्ठीहवनपद्धतिः
६. शिवपुराण
७. दुर्गासप्तशती (भाषाटीका)
८. उपनयनपद्धतिः

पुस्तक प्राप्ति का स्थान :

प्रकाशक : **रुपेश ठाकुर प्रसाद प्रकाशन**

कचौड़ीगली, वाराणसी-221001

मुद्रक- भारत प्रेस, कचौड़ीगली, वाराणसी

